किरातानामधिपतीनजयत्सप्त पाण्डवः ॥ १५
ततः सुह्मान्प्रसुह्मांश्च सपक्षानतिवीर्यवान्।
विजित्य युधि कौन्तेयो मागधानभ्यधाद्बली॥१६
दण्डं च दण्डधारं च विजित्य पृथिवीपतीन्।
तैरेव सहितैः सर्वैर्गिरिव्रजमुपाद्रवत् ॥ १७
जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह।
तैरेव सहितैः सर्वैः कर्णमभ्यद्रवद्बली ॥ १८
स कम्पयन्निव महीं बलेन चतुरङ्गिणा।
युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ १९
स कर्णं युधि निर्जित्य वशे कृत्वा च भारत।
ततो विजिग्ये बलवान्राज्ञः पर्वतवासिनः ॥ २०
अथ मोदागिरौ चैव राजानं बलवत्तरम्।
पाण्डवो बाहुवीर्येण निजघान महामृधे ॥ २१
ततः पुण्ड्राधिपं वीरं वासुदेवं समाययौ।
'इदानीं वृष्णिवीरेण न योत्स्यामीति पौण्ड्रकः॥२२
कृष्णस्य भुजसंत्रासात्करमाशु ददौ नृपः।'
कौशिकीकच्छनिलयं राजानं च महौजसम् ॥२३
उभौ बलभृतौ वीरावुभौ तीव्रपराक्रमौ।
निर्जित्याजौ महाराज वङ्गराजमुपाद्रवत् ॥ २४
समुद्रसेनं निर्जित्य चन्द्रसेनं च पार्थिवम्।
ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा ॥ २५
सुह्मानामधिपं चैव ये च सागरवासिनः।
सर्वान्म्लेच्छगणांश्चैव विजिग्ये भरतर्षभः ॥ २६
एवं बहुविधान्देशान्विजित्य पवनात्मजः।
वसु तेभ्य उपादाय लौहित्यमगमद्बली ॥ २७
स सर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः।
करमाहारयामास रत्नानि विविधानि च ॥ २८
चन्दनागुरुवस्त्राणि मणिमौक्तिककम्बलम्।
काञ्चनं रजतं चैव विद्रुमं च महाधनम् ॥ २९
ते कोटीशतसङ्ख्येन कौन्तेयं महता तदा।
अभ्यवर्षन्महात्मानं धनवर्षेण पाण्डवम् ॥ ३०
इन्द्रप्रस्थमुपागम्य भीमो भीमपराक्रमः।
निवेदयामास तदा धर्मराजाय तद्धनम् ॥ ३१

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

दक्षिणदिग्विजये शूरसेनादीञ्जितवतः सहदेवस्य माहिष्मत्यां नीलेन सह युद्धम् ॥ १ ॥ नीलस्य अग्निसाहाय्यकरणकारणकथनम् ॥ २ ॥ सहदेवस्तुत्या तुष्टस्याग्नेराज्ञया नीलेनार्चितस्य सहदेवस्य विभीषणात्करग्रहणार्थं घटोत्कचप्रेषणम् ॥ ३ ॥

वैशंपायन उवाच।
तथैव सहदेवोऽपि धर्मराजेन पूजितः।
महत्या सेनया राजन्प्रययौ दक्षिणां दिशम्॥ १
स शूरसेनान्कार्त्स्न्येन पूर्वमेवाजयत्प्रभुः।
मत्स्यराजं च कौरव्यो वशे चक्रे बलाद्बली ॥ २
अधिराजाधिपं चैव दन्तवक्रं महाबलम्।
जिगाय करदं चैव कृत्वा राज्ये न्यवेशयत् ॥ ३
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम्।
तथैवापरमत्स्यांश्च व्यजयत्स पटच्चरान् ॥ ४
निषादभूमिं गोशृङ्गं पर्वतप्रवरं तथा।
तरसैवाजयद्धीमाञ्श्रेणिमन्तं च पार्थिवम् ॥ ५
नवराष्ट्रं च निर्जित्य कुन्तिभोजमुपाद्रवत्।
प्रीतिपूर्वं च तस्यासौ प्रतिजग्राह शासनम् ॥ ६
ततश्चर्मण्वतीकूले जम्भकस्यात्मजं नृपम्।
ददर्श वासुदेवेन शेषितं पूर्ववैरिणा ॥ ७
चक्रे तेन स सङ्ग्रामं सहदेवेन भारत।
स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ॥८
सेकानपरसेकांश्च व्यजयत्सुमहाबलः।
करं तेभ्य उपादाय रत्नानि विविधानि च ॥ ९
ततस्तेनैव सहितो नर्मदामभितो ययौ।

सुह्मा राढाः। मागधानभ्यधाद्बली करं प्रयच्छेत्युक्तवान्। पूर्वमेव पराक्रान्तत्वात् ॥ १६ ॥ एकत्रिंशोध्यायः ॥ ३१ ॥

पटच्चरान् चोरदेशान् ॥ ४ ॥

'भगदत्तं महाबाहुं क्षत्रियं नरकात्मजम् ।
अर्जुनाय करं दत्तं श्रुत्वा तत्र न्यवर्तत ॥' १०
विन्दानुविन्दावावन्त्यौ सैन्येन महतावृतौ ।
जिगाय समरे वीरावाश्विनेयः प्रतापवान् ॥ ११
ततो रत्नान्युपादाय पुरं भोजकटं ययौ ।
तत्र युद्धमभूद्राजन्दिवसद्वयमच्युत ॥ १२
स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः ।
कोसलाधिपतिं चैव तथा वेणातटाधिपम् ॥१३
कान्तारकांश्च समरे तथा प्राकोटकान्नृपान् ।
नाटकेयांश्च समरे तथा हेरम्बकान्युधि ॥ १४
मारुधं च विनिर्जित्य रम्यग्राममथो बलात् ।
नाचीनानर्बुकांश्चैव राजानश्च महाबलः ॥ १५
तांस्तानाटविकान्सर्वानजयत्पाण्डुनन्दनः ।
वाताधिपं च नृपतिं वशे चक्रे महाबलः ॥ १६
पुलिन्दांश्च रणे जित्वा ययौ दक्षिणतः पुरः ।
युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः ॥ १७
तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ।
गुहामासादयामास किष्किन्धां लोकविश्रुताम् ॥
'पुरा वानरराजेन वालिना चाभिरक्षिताम् ।
ततः कोसलराजस्य रामस्यैवानुगेन च ।
सुग्रीवेणाभिगुप्तां तां प्रविष्टस्तमथाह्वयत् ॥' १९
तत्र वानरराजाभ्यां मैन्देन द्विविदेन च ।
युयुधे दिवसान्सप्त न च तौ विकृतिं गतौ ॥२०
ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ ।
ऊचतुश्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ॥ २१
गच्छ पाण्डवशार्दूल रत्नान्यादाय सर्वशः ।
अविघ्नमस्तु कार्याय धर्मराजाय धीमते ॥ २२
ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ ॥
तत्र नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ॥ २३
पाण्डवः परवीरघ्नः सहदेवः प्रतापवान् ॥
ततोऽस्य सुमहद्युद्धमासीद्भीरुभयंकरम् ॥ २४
सैन्यक्षयकरं चैव प्राणानां संशयावहम् ।
चक्रे तस्य हि साहाय्यं भगवान्हव्यवाहनः ॥२५
ततो रथा हया नागाः पुरुषाः कवचानि च ।
प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा ॥ २६
ततः सुसंभ्रान्तमना बभूव कुरुनन्दनः ।
नोत्तरं प्रतिवक्तुं च शक्तोऽभूज्जनमेजय ॥ २७

जनमेजय उवाच ।

किमर्थं भगवान्वह्निः प्रत्यमित्रोऽभवद्युधि ।
सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ॥ २८

वैशंपायन उवाच ।

तत्र माहिष्मतीवासी भगवान्हव्यवाहनः ।
श्रूयते हि गृहीतो वै पुरस्तात्पारदारिकः ॥ २९
नीलस्य राज्ञो दुहिता बभूवातीव शोभना ।
साऽग्निहोत्रमुपातिष्ठद्बोधनाय पितुः सदा ॥ ३०
व्यजनैर्धूयमानोऽपि तावत्प्रज्वलते न सः ।
यावच्चारुपुटौष्ठेन वायुना न विधूयते ॥ ३१
ततः स भगवानग्निश्चकमे तां सुदर्शनाम् ।
नीलस्य राज्ञः सर्वेषामुपनीतश्च सोऽभवत् ॥ ३२
ततो ब्राह्मणरूपेण रममाणो यदृच्छया ॥
चकमे तां वरारोहां कन्यामुत्पललोचनाम् ।
तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा ॥ ३३
प्रजज्वाल ततः कोपाद्भगवान्हव्यवाहनः ।
तं दृष्ट्वा विस्मितो राजा जगाम शिरसाऽवनिम् ॥३४
ततः कालेन तां कन्यां तथैव हि तदा नृपः ।
प्रददौ विप्ररूपाय वह्नये शिरसा नतः ॥ ३५
प्रतिगृह्य च तां सुभ्रूं नीलराज्ञः सुतां तदा ।
चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः ॥ ३६
वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः ।
अभयं च स जग्राह स्वसैन्ये वै महीपतिः ॥ ३७
ततःप्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः ।
जिगीषन्ति बलाद्राजंस्ते दह्यन्ते स्म वह्निना ॥३८
तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह ।
बभूवुरनतिग्राह्या योषितश्छन्दतः किल ॥ ३९
एवमग्निर्वरं प्रादात्स्त्रीणामप्रतिवारणे ।
स्वैरिण्यस्तत्र नार्यो हि यथेष्टं विचरन्त्युत ॥ ४०
वर्जयन्ति च राजानस्तत्पुरं भरतर्षभ ।
भयादग्नेर्महाराज तदाप्रभृति सर्वदा ॥ ४१

सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ।
परीतमग्निना राजन्नाकम्पत यथाऽचलः ।
उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत्पावकं ततः ॥४२
सहदेव उवाच ।
त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन्नमोस्तु ते ।
मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक ॥ ४३
पावनात्पावकश्चासि वहनाद्धव्यवाहनः ।
वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ॥४४
चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो ।
स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी ॥४५
वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरितेजसः ।
कुमारसूस्त्वं भगवान्रुद्रगर्भो हिरण्यकृत् ॥ ४६
अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे ।
पृथिवी बलमादध्याच्छिवं चापो दिशन्तु मे ॥४७
अपां गर्भ महासत्व जातवेदः सुरेश्वर ।
देवानां मुखमग्ने त्वं सत्येन विपुनीहि माम् ४८
ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि ।
नित्यं सुहुत यज्ञेषु सत्येन विपुनीहि माम् ॥४९
धूमकेतुः शिखी च त्वं पापहाऽनिलसंभवः ।
सर्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम् ५०
एवं स्तुतोऽसि भगवन्प्रीतेन शुचिना मया ।
तुष्टिं पुष्टिं श्रुतं चैव प्रीतिं चाग्ने प्रयच्छ मे ॥५१
वैशंपायन उवाच ।
इत्येवं मन्त्रमाग्नेयं पठन्यो जुहुयाद्विभुम् ।
ऋद्धिमान्सततं दान्तः सर्वपापैः प्रमुच्यते ॥ ५२
सहदेव उवाच ।
यज्ञविघ्नमिमं कर्तुं नार्हस्त्वं यज्ञवाहन ।
एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य मेदिनीम् ॥५३
विधिवत्पुरुषव्याघ्रः पावकं प्रत्युपाविशत् ।
प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत ॥ ५४
न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः ।
तमुपेत्य शनैर्वह्निरुवाच कुरुनन्दनम् ॥ ५५
सहदेवं नृणां देवं सान्त्वपूर्वमिदं वचः ।
उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं कृता मया ॥ ५६
वेद्मि सर्वमभिप्रायं तव धर्मसुतस्य च ।
मया तु रक्षितव्या पूरियं भरतसत्तम ॥ ५७
यावद्राज्ञो हि नीलस्य कुले वंशधरा इति ।
ईप्सितं तु करिष्यामि मनसस्तव पाण्डव ॥ ५८
तत उत्थाय हृष्टात्मा प्राञ्जलिः शिरसा नतः ।
पूजयामास माद्रेयः पावकं भरतर्षभ ॥ ५९
पावके विनिवृत्ते तु नीलो राजाऽभ्यगात्तदा ।
पावकस्याज्ञया चैनमर्चयामास पार्थिवः ॥ ६०
सत्कारेण नरव्याघ्रं सहदेवं युधां पतिम् ।
प्रतिगृह्य च तां पूजां करे च विनिवेश्य च ॥६१
माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ।
त्रैपुरं स वशे कृत्वा राजानममितौजसम् ॥ ६२
निजग्राह महाबाहुस्तरसा पौरवेश्वरम् ।
आकृतिं कौशिकाचार्यं यत्नेन महता ततः ॥६३
वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तदा ।
सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे ॥ ६४
राज्ञे भोजकटस्थाय महामात्राय धीमते ।
भीष्मकाय स धर्मात्मा साक्षादिन्द्रसखाय वै ६५
स चास्य प्रतिजग्राह ससुतः शासनं तदा ।
प्रीतिपूर्वं महाराज वासुदेवमवेक्ष्य च ॥ ६६
ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ।
ततः शूर्पारकं चैव तालाकटमथापि च ॥ ६७
वशे चक्रे महातेजा दण्डकांश्च महाबलः ।
सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान् ॥६८
निषादान्पुरुषादांश्च कर्णप्रावरणानपि ।
ये च कालमुखा नाम नरराक्षसयोनयः ॥ ६९
कृत्स्नं कोलगिरिं चैव सुरभीपट्टनं तथा ।
द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा ॥ ७०
तिमिङ्गिलं च स नृपं वशे कृत्वा महामतिः ।
एकपादांश्च पुरुषान्केरलान्वनवासिनः ॥ ७१
नगरीं संजयन्तीं च पाषण्डं करहाटकम् ।
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ ७२
पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः ।
अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान् ॥७३

आटवीं च पुरीं रम्यां यवनानां पुरं तथा ।
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ ७४
'ताम्रपर्णीं ततो गत्वा कन्यातीर्थमतीत्य च ।
दक्षिणां च दिशं सर्वां विजित्य कुरुनन्दनः॥७५
उत्तरं तीरमासाद्य सागरस्योर्मिमालिनः ।
चिन्तयामास कौन्तेयो भ्रातुः पुत्रं घटोत्कचम् ७६
ततश्चिन्तितमात्रस्तु राक्षसः प्रत्यदृश्यत ।
तं मेरुशिखराकारमागतं पाण्डुनन्दनः ॥ ७७
भृगुकच्छात्ततो धीमान्सान्त्वेवामित्रकर्शनः ।
आगम्यतामिति प्राह धर्मराजस्य शासनात्॥७८
स राक्षसपरीवारस्तं प्रणम्याशु संस्थितः ।
घटोत्कचं महात्मानं राक्षसं घोरदर्शनम् ॥ ७९
तत्रस्थः प्रेषयामास पौलस्त्याय महात्मने ।'
बिभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः ॥ ८०
स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कृष्णकृतं धीमानभ्यमन्यत स प्रभुः ॥ ८१
ततः संप्रेषयामास रत्नानि विविधानि च ।
चन्दनागुरुकाष्ठानि दिव्यान्याभरणानि च ॥
वासांसि च महार्हाणि मणींश्चैव महाधनान्॥८२

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

जनमेजयप्रश्नानुरोधेन सहदेवस्य द्राविडपाण्ड्यदेशगमनकथनम् ॥ १ ॥

'जनमेजय उवाच ।
इच्छाम्यागमनं श्रोतुं हैडिम्बस्य द्विजोत्तम ।
लङ्कायां च गतिं ब्रह्मन्पौलस्त्यस्य च दर्शनम्॥१
कावेरीदर्शनं चैव आनुपूर्व्या वदस्व मे ।
वैशंपायन उवाच ।
शृणु राजन्यथा वृत्तं सहदेवस्य साहसम् ॥ २
काननद्वीपगांश्चैव तरसाऽऽजित्य चाहवे ।
दक्षिणां च दिशं जित्वा चोलस्य विषयं ययौ॥३
ददर्श पुण्यतोयां वै कावेरीं सरितां वराम् ।
नानापक्षिगणैर्जुष्टां तापसैरुपशोभिताम् ॥ ४
साललोध्रार्जुनैर्बिल्वैर्जम्बूशाल्मलकिंशुकैः ।
कदम्बैः सप्तपर्णैश्च काश्मर्यामलकैर्वृताम् ॥ ५
न्यग्रोधैश्च महाशाखैः प्लक्षैरौदुम्बरैरपि ।
शमीपलाशवृक्षैश्च अश्वत्थैः खदिरैर्वृताम् ॥ ६
बदरीभिश्च संछन्नामश्वकर्णैश्च शोभिताम् ।
चूतैः पुण्ड्रकपत्रैश्च कदलीवनसंवृताम् ॥ ७
चक्रवाकगणैः कीर्णां प्लवैश्च जलवायसैः ।
समुद्रकाकैः क्रौञ्चैश्च नादितां जलकुक्कुटैः ॥ ८
एवं खगैश्च बहुभिः संघुष्टां जलवासिभिः ।
आश्रमैर्बहुभिः सक्तां चैत्यवृक्षैश्च शोभिताम् ॥९
शोभितां ब्राह्मणैः शुभ्रैर्वेदवेदाङ्गपारगैः ।
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम् ॥ १०
क्वचित्सुपुष्पितैर्वृक्षैः क्वचित्सौगन्धिकोत्पलैः ।
कह्लारकुमुदोत्फुल्लैः कमलैरुपशोभिताम् ॥ ११
कावेरीं तादृशीं दृष्ट्वा प्रीतिमान्पाण्डवस्तदा ।
असद्राष्ट्रे यथा गङ्गा कावेरी च तथा शुभा॥१२
सहदेवस्तु तां तीर्त्वा नदीमनुचरैः सह ।
दक्षिणं तीरमासाद्य गमनायोपचक्रमे ॥ १३
आगतं पाण्डवं तत्र श्रुत्वा विषयवासिनः ।
दर्शनार्थं ययुस्ते तु कौतूहलसमन्विताः ॥ १४
द्रमिडाः पुरुषा राजन्स्त्रियश्च प्रियदर्शनाः ।
गत्वा पाण्डुसुतं तत्र ददृशुस्ते मुदाऽन्विताः॥१५
सुकुमारं विशालाक्षं व्रजन्तं त्रिदशोपमम् ।
दर्शनीयतमं लोके नेत्रैरनिमिषैरिव ॥ १६
आश्चर्यभूतं ददृशुर्द्रमिडास्ते समागताः ।
महासेनोपमं दृष्ट्वा पूजां चक्रुश्च तस्य वै ॥ १७
रत्नैश्च विविधैरिष्टैर्भोगैरन्यैश्च संमतैः ।
गतिमङ्गलयुक्ताभिः स्तुवन्तो नकुलानुजम् ॥१८

सहदेवस्तु तान्दृष्ट्वा द्रमिलानागतान्मुदा ।
विसृज्य तान्महाबाहुः प्रस्थितो दक्षिणां दिशम् १९
दूतेन तरसा चोलं विजित्य द्रमिडेश्वरम् ।
ततो रत्नान्युपादाय पाण्ड्यस्य विषयं ययौ ॥ २०
दर्शने सहदेवस्य न च तृप्ता नराः परे ।
गच्छन्तमनुगच्छन्तः प्राप्ताः कौतूहलान्विताः॥२१
ततो माद्रीसुतो राजन्मृगसङ्घान्विलोकयन् ।
गजान्वनचरानन्यान्व्याघ्रान्कृष्णमृगान्बहून् २२
शुकान्मयूरान्दृष्ट्वा तु गृध्रानारण्यकुक्कुटान् ।
ततो देशं समासाद्य श्वशुरस्य महीपतेः ॥ २३
प्रेषयामास माद्रेयो दूतान्पाण्ड्याय वै तदा ।
प्रतिजग्राह तस्याज्ञां संप्रीत्या मलयध्वजः ॥ २४
भार्या रूपवती जिष्णोः पाण्ड्यस्य तनया शुभा ।
चित्राङ्गदेति विख्याता द्रमिडी योषितां वरा२५
आगतं सहदेवं तु सा श्रुत्वाऽन्तःपुरे पितुः ।
प्रेषयामास संप्रीत्या पूजारत्नं च वै बहु ॥ २६
पाण्ड्योऽपि बहुरत्नानि दूतैः सह मुमोच ह ।
मणिमुक्ताप्रवालानि सहदेवाय कीर्तिमान् ॥२७
तां दृष्ट्वाऽप्रतिमां पूजां पाण्डवोऽपि मुदा नृप ।
भ्रातुः पुत्रे बहून्रत्नान्दत्वा वै बभ्रुवाहने ॥ २८
पाण्ड्यं द्रमिडराजानं श्वशुरं मलयध्वजम् ।
स दूतैस्तं वशे कृत्वा मणलूरेश्वरं तदा ॥ २९
ततो रत्नान्युपादाय द्रमिडैरावृतो ययौ ।
अगस्त्यस्यालयं दिव्यं देवलोकसमं गिरिम् ॥३०
स तं प्रदक्षिणं कृत्वा मलयं भरतर्षभ ।
लङ्घयित्वा तु माद्रेयस्ताम्रपर्णीं नदीं शुभाम्॥३१
प्रसन्नसलिलां दिव्यां सुशीतां च मनोहराम् ।
समुद्रतीरमासाद्य न्यविशत्पाण्डुनन्दनः ॥ ३२

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

स्मृतिमात्रागतघटोत्कचलङ्काप्रेषणवृत्तान्तस्य विस्तरेण कथनम् ॥ १ ॥ कृष्णगौरवेण विभीषणेन करदानम् ॥ २ ॥ विभीषणात्करमाहृतवता घटोत्कचेन सह सहदेवस्य प्रतिनिवर्तनम् ॥ ३ ॥

वैशंपायन उवाच ।
सहदेवस्ततो राजा मन्त्रिभिः सह भारत ।
संप्रधार्य महाबाहुः सचिवैर्बुद्धिमत्तरैः ॥ १
स विचार्य तदा राजन्सहदेवस्त्वरान्वितः ।
चिन्तयामास राजेन्द्र भ्रातुः पुत्रं घटोत्कचम् ॥२
ततश्चिन्तितमात्रे तु राक्षसः प्रत्यदृश्यत ।
अतिदीर्घो महाबाहुः सर्वाभरणभूषितः ॥ ३
नीलजीमूतसङ्काशस्तप्तकाञ्चनकुण्डलः ।
विचित्रहारकेयूरः किङ्किणीमणिभूषितः ॥ ४
हेममाली महादंष्ट्रः किरीटी कुक्षिबन्धनः ।
ताम्रकेशो हरिश्मश्रुर्भीमाङ्गः कटकाङ्गदः ॥ ५
रक्तचन्दनदिग्धाङ्गः सूक्ष्माम्बरधरो बली ।
बलेन स ययौ तत्र चालयन्निव मेदिनीम् ॥ ६
ततो दृष्ट्वा जना राजन्नायान्तं पर्वतोपमम् ।
भयाद्धि दुद्रुवुः सर्वे सिंहात्क्षुद्रमृगा यथा ॥ ७
आससाद च माद्रेयं पुलस्त्यं रावणो यथा ।
अभिवाद्य ततो राजन्सहदेवं घटोत्कचः ॥ ८
प्रह्वः कृताञ्जलिस्तस्थौ किं कार्यमिति चाब्रवीत् ।
तं परिष्वज्य बाहुभ्यां मूर्ध्न्युपाघ्राय पाण्डवः ॥९
तं मेरुशिखराकारमागतं पाण्डुनन्दनः ।
पूजयित्वा सहामात्यः प्रीतो वाक्यमुवाच ह ॥१०
गच्छ लङ्कां पुरीं वत्स करार्थं मम शासनात् ।
तत्र दृष्ट्वा महात्मानं राक्षसेन्द्रं विभीषणम् ॥११
रत्नानि राजसूयार्थं विविधानि बहूनि च ।
उपादाय च सर्वाणि प्रत्यागच्छ महाबल ॥ १२
वैशंपायन उवाच ।
पाण्डवेनैवमुक्तस्तु मुदा युक्तो घटोत्कचः ।
तथेत्युक्त्वा महाराज प्रतस्थे दक्षिणां दिशम् १३

प्रययौ दक्षिणं कृत्वा सहदेवं घटोत्कचः ।
लङ्कामभिमुखो राजन्समुद्रं स व्यलोकयत् ॥ १४
कूर्मग्राहझषाकीर्णं मीननक्रैस्तथाऽऽकुलम् ।
शुक्तिव्रातसमाकीर्णं शङ्खानां निचयाकुलम् ॥ १५
स दृष्ट्वा रामसेतुं च चिन्तयन्रामविक्रमम् ।
गत्वा पारं समुद्रस्य दक्षिणं स घटोत्कचः ॥ १६
ददर्श लङ्कां राजेन्द्र नाकपृष्ठोपमां शुभाम् ।
प्राकारेणावृतां रम्यां शुभद्वारैश्च शोभिताम् ॥ १७
प्रासादैर्बहुसाहस्रैः श्वेतरक्तैश्च सङ्कुलाम् ।
दिव्यदुन्दुभिनिर्ह्रादामुद्यानवनशोभिताम् ॥ १८
सर्वकालफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ।
पुष्पगन्धैश्च सङ्कीर्णां रमणीयमहारथाम् ॥ १९
नानारत्नैश्च संपूर्णामिन्द्रस्येवामरावतीम् ।
विवेश स पुरीं लङ्कां राक्षसैश्च निषेविताम् ॥ २०
ददर्श राक्षसव्रातान्शूलप्रासधरान्बहून् ।
नानावेषधरान्दक्षान्नारीश्च प्रियदर्शनाः ॥ २१
दिव्यमाल्याम्बरधरा दिव्यभूषणभूषिताः ।
मदरक्तान्तनयनाः पीनश्रोणिपयोधराः ॥ २२
भैमसेनिं ततो दृष्ट्वा हृष्टास्ते विस्मयं गताः ।
आससाद गृहं राज्ञ इन्द्रस्य सदनोपमम् ॥ २३
स द्वारपालमासाद्य वाक्यमेतदुवाच ह ।

घटोत्कच उवाच ।

कुरूणामृषभो राजा पाण्डुर्नाम महाबलः ॥ २४
कनीयांस्तस्य दायादः सहदेव इति श्रुतः ।
तेनाहं प्रेषितो दूतः करार्थं कौरवस्य च ॥ २५
द्रष्टुमिच्छामि राजेन्द्रं त्वं क्षिप्रं मां निवेदय ।

वैशंपायन उवाच ।

तस्य तद्वचनं श्रुत्वा द्वारपालो महीपते ॥ २६
तथेत्युक्त्वा विवेशाथ भवनं स निवेदकः ।
प्राञ्जलिः सर्वमाचष्ट सर्वां दूतगिरं तदा ॥ २७
द्वारपालवचः श्रुत्वा राक्षसेन्द्रो विभीषणः ।
उवाच वाक्यं धर्मात्मा समीपं मे प्रवेश्यताम् २८
एवमुक्तस्तु राज्ञा स धर्मज्ञेन महात्मना ।
अथ निष्क्रम्य संभ्रान्तो द्वार्स्थो हैडिम्बमब्रवीत् २९

एहि दूत नृपं द्रष्टुं क्षिप्रं प्रविश च स्वयम् ।
द्वारपालवचः श्रुत्वा प्रविवेश घटोत्कचः ॥ ३०
स प्रविश्य ददर्शाथ राक्षसेन्द्रस्य मन्दिरम् ।
ततः कैलाससङ्काशं तप्तकाञ्चनतोरणम् ॥ ३१
प्राकारेण परिक्षिप्तं गोपुरैश्चापि शोभितम् ।
हर्म्यप्रासादसंबाधं नानारत्नोपशोभितम् ॥ ३२
काञ्चनैस्तापनीयैश्च स्फाटिकै राजतैरपि ।
वज्रवैडूर्यजुष्टैश्च स्तम्भैश्च सुमनोहरैः ॥ ३३
नानाध्वजपताकाभिर्युक्तं मणिविचित्रितम् ।
चित्रमाल्यावृतं रम्यं तप्तकाञ्चनवेदिकम् ॥ ३४
स दृष्ट्वा तत्र सर्वं च भैमसेनिर्मनोहरम् ।
प्रविशन्नेव हैडिम्बः शुश्राव मधुरस्वरम् ॥ ३५
तन्त्रीगीतसमाकीर्णं समतालमिताक्षरम् ।
दिव्यदुन्दुभिनिर्ह्रादं वादित्रसततं शुभम् ॥ ३६
स श्रुत्वा मधुरं शब्दं प्रीतिमानभवत्तदा ।
ततो विगाह्य हैडिम्बो बहुकक्ष्यां मनोरमाम् ३७
स ददर्श महात्मानं द्वार्स्थेन सह भारत ।
तं विभीषणमासीनं काञ्चने परमासने ॥ ३८
दिवि भास्करसङ्काशं मुक्तामणिविभूषितम् ।
दिव्याभरणचित्राङ्गं दिव्यरूपधरं विभुम् ॥ ३९
दिव्यमाल्याम्बरधरं दिव्यगन्धोक्षितं शुभम् ।
विभ्राजमानं वपुषा सूर्यवैश्वानरप्रभम् ॥ ४०
उपोपविष्टं सचिवैर्देवैरिव शतक्रतुम् ।
यक्षैर्महात्मभिर्दिव्यनारीभिर्हृद्यकान्तिभिः ॥ ४१
गीतैर्मङ्गलयुक्तैश्च पूज्यमानं यथा दिवि ।
चामरे व्यजने चाग्र्ये हेमदण्डे महाधने ॥ ४२
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि ।
अर्चिष्मन्तं श्रिया जुष्टं कुबेरवरुणोपमम् ॥ ४३
धर्मे चैव स्थितं नित्यमद्भुतं राक्षसेश्वरम् ।
राममिक्ष्वाकुनाथं वै स्मरन्तं मनसा सदा ॥ ४४
दृष्ट्वा घटोत्कचो राजन्ववन्दे तं कृताञ्जलिः ।
प्रह्वस्तस्थौ महावीर्यः शक्रं चित्ररथो यथा ॥ ४५
तं दूतमागतं दृष्ट्वा राक्षसेन्द्रो विभीषणः ।
पूजयित्वा यथान्यायं सान्त्वपूर्वं वचोऽब्रवीत् ४६

विभीषण उवाच ।
कस्य वंशे स संजातः करमिच्छन्महीपतिः ।
तस्यानुजान्समस्तांश्च पुरं देशं च तस्य वै ॥ ४७
त्वां च कार्यं च तत्सर्वं श्रोतुमिच्छामि तत्वतः ।
विस्तरेण मम ब्रूहि सर्वानेतान्पृथक्पृथक् ॥ ४८
वैशंपायन उवाच ।
एवमुक्तस्तु हैडिम्बः पौलस्त्येन महात्मना ।
कृताञ्जलिरुवाचाथ समर्थमिदमुत्तरम् ॥ ४९
घटोत्कच उवाच ।
सोमवंशोद्भवो राजा पाण्डुर्नाम महाबलः ।
पाण्डोश्च पुत्राः पञ्चासञ्छक्रतुल्यपराक्रमाः ॥ ५०
तेषां ज्येष्ठस्तु नाम्ना वै युधिष्ठिर इति श्रुतः ।
अजातशत्रुर्धर्मात्मा धर्मो विग्रहवानिव ॥ ५१
ततो युधिष्ठिरो राजा प्राप्य राज्यमकारयत् ।
गङ्गाया दक्षिणे तीरे नगरे नागसाह्वये ॥ ५२
तद्दत्वा धृतराष्ट्राय शक्रप्रस्थं ययौ ततः ।
भ्रातृभिः सह राजेन्द्र शक्रप्रस्थेऽन्वमोदत ॥ ५३
गङ्गायमुनयोर्मध्ये ते उभे नगरोत्तमे ।
नित्यं धर्मे स्थितो राजा शक्रप्रस्थे प्रशास्ति नः॥५४
तस्यानुजो महाबाहुर्भीमसेन इति श्रुतः ।
महातेजा महाकीर्तिः शक्रतुल्यपराक्रमः ॥ ५५
दशनागसहस्राणां बले तुल्यः स पाण्डवः ।
तस्यानुजोऽर्जुनो नाम महाबलपराक्रमः ॥ ५६
सुकुमारो महासत्वो लोके वीर्येण विश्रुतः ।
कार्तवीर्यसमो वीर्ये सागरप्रतिमो बले ॥ ५७
जामदग्न्यसमश्चास्त्रे सङ्ख्ये रामसमोऽर्जुनः ।
रूपे शक्रसमः पार्थस्तेजसा भास्करोपमः ॥ ५८
देवदानवगन्धर्वैः पिशाचोरगराक्षसैः ।
मानुषैश्च समस्तैस्तु अजेयः फल्गुनो रणे ॥ ५९
तेन तत्खाण्डवं दावं तर्पितं जातवेदसे ।
विजित्य तरसा शक्रं युधि देवगणैः सह ॥ ६०
लब्धान्यस्त्राणि दिव्यानि तर्पयित्वा हुताशनम् ।
तेन लब्धा महाराज दुर्लभा दैवतैरपि ॥ ६१
वासुदेवस्य भगिनी सुभद्रा नाम विश्रुता ।
अर्जुनस्यानुजो राजन्नकुलश्चेति विश्रुतः ॥ ६२
दर्शनीयतमो लोके मूर्तिमानिव मन्मथः ।
तस्यानुजो महातेजाः सहदेव इति श्रुतः ॥ ६३
तेनाहं प्रेषितो राजन्कुमारेण समो रणे ।
अहं घटोत्कचो नाम भीमसेनसुतो बली ॥ ६४
मम माता महाभागा हिडिम्बा नाम राक्षसी ।
पार्थानामुपकारार्थं चरामि पृथिवीमिमाम् ॥६५
आसीत्पृथिव्याः सर्वस्या महीपालो युधिष्ठिरः ।
राजसूयं क्रतुश्रेष्ठमाहर्तुमुपचक्रमे ॥ ६६
संदिदेश च स भ्रातॄन्करार्थं सर्वतोदिशम् ।
वृष्णिवीरेण सहितः संदिदेशानुजान्नृपः ॥ ६७
उदीचीमर्जुनस्तूर्णं गत्वा मेरोरथोत्तमः ।
गत्वा शतसहस्राणि योजनानि महाबलः ॥ ६८
जित्वा सर्वान्नृपान्युद्धे हत्वा च तरसा वशी ।
स्वर्गद्वारमुपागम्य रत्नान्यादाय वै भृशम् ॥ ६९
अश्वांश्च विविधान्दिव्यान्सर्वानादाय फल्गुनः ।
धनं बहुविधं राजन्धर्मपुत्राय वै ददौ ॥ ७०
भीमसेनो हि राजेन्द्र जित्वा प्राचीं दिशं बलात् ।
वशे कृत्वा महीपालान्पाण्डवाय धनं ददौ ॥ ७१
दिशं प्रतीचीं नकुलः करार्थं प्रययौ तथा ।
सहदेवो दिशं याम्यां जित्वा सर्वान्महीक्षितः ७२
मां सन्दिदेश राजेन्द्र करार्थमिह सत्कृतः ।
पार्थानां चरितं तुभ्यं सङ्क्षेपात्समुदाहृतम् ॥ ७३
तमवेक्ष्य महाराज धर्मराजं युधिष्ठिरम् ।
पावनं राजसूयं च भगवन्तं हरिं प्रभुम् ।
एतानवेक्ष्य धर्मज्ञ करं दातुमिहार्हसि ॥ ७४
वैशंपायन उवाच ।
तेन तद्भाषितं श्रुत्वा राक्षसेन्द्रो विभीषणः ।
शासनं प्रतिजग्राह धर्मात्मा राक्षसैः सह ॥ ७५
तच्च कृष्णकृतं धीमानित्यमन्यत स प्रभुः ।
ततो ददौ विचित्राणि कम्बलानि कुथानि च ७६
दान्तकाञ्चनपर्यङ्कान्मणिहेमविचित्रितान् ।
भूषणानि महार्हाणि प्रवालानि मणींश्च सः॥७७
काञ्चनानि च भाण्डानि कलशानि घटानि च ।

कृटाहानि विचित्राणि द्रोण्यश्चैव सहस्रशः ॥७८
राजतानि च भाण्डानि रत्नगर्भांश्च कुण्डलान् ।
हेमपुष्पाणि चान्यानि रुक्ममुख्यानि चापरान् ॥
शङ्खांश्च चन्द्रसङ्काशांश्चित्रावर्तविचित्रितान् ।
यज्ञस्य तोरणे युक्तान्ददौ तालांश्चतुर्दश ॥ ८०
रुक्मपङ्कजपुष्पाणि शिबिका मणिभूषिताः ।
मुकुटानि महार्हाणि रत्नगर्भांश्च कङ्कणान् ॥ ८१
चन्दनानि च मुख्यानि वासांसि विविधानि च ।
स ददौ सहदेवाय तदा राजा विभीषणः ॥ ८२
तानि सर्वाणि रत्नानि आजह्रुस्ते निशाचराः ।
अष्टाशीतिसहस्राणि समदा रक्तलोचनाः ॥ ८३
रत्नान्यादाय सर्वाणि प्रतस्थे स घटोत्कचः ।
विभीषणं च राजानमभिवाद्य कृताञ्जलिः ॥८४
प्रदक्षिणं परीत्यैव निर्जगाम घटोत्कचः ।
ततो रत्नान्युपादाय हैडिम्बो राक्षसैः सह ॥८५
जगाम तूर्णं लङ्कायाः सहदेवपदं प्रति ।
आसेदुः पाण्डवं सर्वे लङ्घयित्वा महोदधिम् ॥८६
सहदेवो ददर्शाथ रत्नाहारान्निशाचरान् ।
आगतान्भीमसङ्काशान्हैडिम्बं च तथा नृप ॥८७
द्रमिला नैर्ऋतान्दृष्ट्वा दुद्रुवुस्ते भयार्दिताः ।
भैमसेनिस्ततो गत्वा माद्रेयं प्राञ्जलिः स्थितः ८८
प्रीतिमानभवद्दृष्ट्वा रत्नौघं तं च पाण्डवः ।
तं परिष्वज्य पाणिभ्यां दृष्ट्वा तान्प्रीतिमानभूत् ८९
विसृज्य द्रविडान्सर्वान्गमनायोपचक्रमे ।
न्यवर्तत ततो धीमान्सहदेवो नराधिपः ॥ ९०
एवं विजित्य तरसा सान्त्वेन विजयेन च ।
करदान्पार्थिवान्कृत्वा प्रत्यागच्छदरिन्दमः ॥ ९१
रत्नसालमुपादाय ययौ सहनिशाचरः ।
इन्द्रप्रस्थं विवेशाथ कम्पयन्निव मेदिनीम् ॥ ९२
दृष्ट्वा युधिष्ठिरं राजन्सहदेवः कृताञ्जलिः ।
प्रह्वोऽभिवाद्य तस्थौ स पूजितश्चापि तेन वै ॥९३
लङ्काप्राप्तान्धनौघांश्च दृष्ट्वा तान्दुर्लभान्बहून् ।
प्रीतिमानभवद्राजा विस्मयं परमं ययौ ॥ ९४
धर्मराजाय तत्सर्वं निवेद्य भरतर्षभ ।
कोटीसहस्रमधिकं हिरण्यस्य महात्मने ॥ ९५
विविधानि च रत्नानि गोजाविमहिषांस्तथा ।
कृतकर्मा सुखं राजन्नुवास जनमेजय ॥ ९६

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥'

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

नकुलस्य पश्चिमदिग्विजयः ॥ १ ॥

वैशंपायन उवाच ।
नकुलस्य तु वक्ष्यामि कर्माणि विजयं तथा ।
वासुदेवजितामाशां यथाऽसावजयत्प्रभुः ॥ १
निर्याय खाण्डवप्रस्थात्प्रतीचीमभितो दिशम् ।
उद्दिश्य मतिमान्प्रायान्महत्या सेनया सह ॥ २
सिंहनादेन महता योधानां गर्जितेन च ।
रथनेमिनिनादैश्च कम्पयन्वसुधामिमाम् ॥ ३
ततो बहु धनं रम्यं गवाढ्यं धनधान्यवत् ।
कार्तिकेयस्य दयितं रोहीतकमुपाद्रवत् ॥ ४
तत्र युद्धं महच्चासीच्छूरैर्मत्तमयूरकैः ।
मरुभूमिं स कात्स्न्र्येन तथैव बहुधान्यकम् ॥ ५
शैरीषकं महेत्थं च वशे चक्रे महाद्युतिः ।
आक्रोशं चैव राजर्षिं तेन युद्धमभून्महत् ॥ ६
तान्दशार्णान्स जित्वा च प्रतस्थे पाण्डुनन्दनः ।
शिबींस्त्रिगर्तानम्बष्ठान्मालवान्पञ्च कर्पटान् ॥ ७
तथा मध्यमकेयांश्च वाटधानान्द्विजानथ ।
पुनश्च परिवृत्याथ पुष्करारण्यवासिनः ॥ ८
गणानुत्सवसङ्केतान्व्यजयत्पुरुषर्षभः ।
सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः ॥९
शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीम् ।
वर्तयन्ति च ये मत्स्यैर्ये च पर्वतवासिनः ॥ १०
कृत्स्नं पञ्चनन्दं चैव तथैवामरपर्वतम् ।

उत्तरज्योतिषं चैव तथा दिव्यकटं पुरम् ॥ ११
द्वारपालं च तरसा वशे चक्रे महाद्युतिः ।
रामठान्हारहूणांश्च प्रतीच्याश्चैव ये नृपाः ॥ १२
तान्सर्वान्स वशे चक्रे शासनादेव पाण्डवः ।
तत्रस्थः प्रेषयामास वासुदेवाय भारत ॥ १३
स चास्य गतभी राजन्प्रतिजग्राह शासनम् ।
ततः शाकलमभ्येत्य मद्राणां पुटभेदनम् ॥ १४
मातुलं प्रीतिपूर्वेण शल्यं चक्रे वशे बली ।
स तेन सत्कृतो राज्ञा सत्कारार्हो विशांपते ॥ १५
रत्नानि भूरीण्यादाय संप्रतस्थे युधां पतिः ।
ततः सागरकुक्षिस्थान्म्लेच्छान्परमदारुणान् ॥ १६
पह्लवान्बर्बरांश्चैव किरातान्यवनाञ्शकान् ।
ततो रत्नान्युपादाय वशे कृत्वा च पार्थिवान् ।
न्यवर्तत कुरुश्रेष्ठो नकुलश्चित्रमार्गवित् ॥ १७
करभाणां सहस्राणि कोशं तस्य महात्मनः ।
ऊहुर्दश महाराज कृच्छ्रादिव महाधनम् ॥ १८
इन्द्रप्रस्थगतं वीरमभ्येत्य स युधिष्ठिरम् ।
ततो माद्रीसुतः श्रीमान्धनं तस्मै न्यवेदयत् ॥ १९
एवं विजित्य नकुलो दिशं वरुणपालिताम् ।
प्रतीचीं वासुदेवेन निर्जितां भरतर्षभ ॥ २०

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ समाप्तं च दिग्विजयपर्व ॥

---

# ( अथ राजसूयपर्व ॥ ४ ॥ )

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

द्वारकातः आगतस्य श्रीकृष्णस्याज्ञया यज्ञसामग्रीसंपादनोपक्रमः ॥ १ ॥ द्वैपायनेन ऋत्विगानयनम् ॥ २ ॥ ब्राह्मणक्षत्रियादीनामामन्त्रणाय दूतप्रेषणम् ॥ ३ ॥ धृतराष्ट्राद्यामन्त्रणाय नकुलगमनम् ॥ ४ ॥ दीक्षा ॥ ५ ॥

वैशंपायन उवाच ।
रक्षणाद्धर्मराजस्य सत्यस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव स्वकर्मनिरताः प्रजाः ॥ १
बलीनां सम्यगादानाद्धर्मतश्चानुशासनात् ।
निकामवर्षी पर्जन्यः स्फीतो जनपदोऽभवत् ॥ २
सर्वारम्भाः सुप्रवृत्ता गोरक्षा कर्षणं वणिक् ।
विशेषात्सर्वमेवैतत्संजज्ञे राजकर्मणः ॥ ३
दस्युभ्यो वञ्चकेभ्यो वा राजन्प्रति परस्परम् ।
राजवल्लभतश्चैव नाश्रूयन्त मृषागिरः ॥ ४
अवर्षं चातिवर्षं च व्याधिपावकमूर्छनम् ।
सर्वमेतत्तदा नासीद्धर्मनित्ये युधिष्ठिरे ॥ ५
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वभावजम् ।
अभिहर्तुं नृपा जग्मुर्नान्यैः कार्यैः कथंचन ॥ ६
धर्म्यैर्धनागमैस्तस्य ववृधे निचयो महान् ।
कर्तुं यस्य न शक्येत क्षयो वर्षशतैरपि ॥ ७
स्वकोष्ठस्य परीमाणं कोशस्य च महीपतिः ।
विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ॥ ८
सुहृदश्चैव ये सर्वे पृथक्च सहचाब्रुवन् ।
यज्ञकालस्तव विभो क्रियतामत्र सांप्रतम् ॥ ९
अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः ।
ऋषिः पुराणो वेदात्मा दृश्यश्चैव विजानताम् १०
जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाप्ययश्च ह ।
भूतभव्यभवन्नाथः केशवः केशिसूदनः ॥ ११
प्राकारः सर्ववृष्णीनामापत्स्वभयदोऽरिहा ।
बलाधिकारे निक्षिप्य सम्यगानकदुन्दुभिम् ॥ १२
उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरुषव्याघ्रो बलेन महता वृतः ॥ १३
तं धनौघमपर्यन्तं रत्नसागरमक्षयम् ।

---

मूर्छनं प्रदीपनम् ॥ ५ ॥

निचयो भाण्डागारम् ॥ ७ ॥

नादयन्रथघोषेण प्रविवेश पुरोत्तमम् ॥ १४
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ।
असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं पुरम् ॥ १५
तं मुदाऽभिसमागम्य सत्कृत्य च यथाविधि ।
स पृष्ट्वा कुशलं चैव सुखासीनं युधिष्ठिरः ॥ १६
धौम्यद्वैपायनमुखैर्ऋत्विग्भिः पुरुषर्षभः ।
भीमार्जुनयमैश्चैव सहितः कृष्णमब्रवीत् ॥ १७

युधिष्ठिर उवाच ।

त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण वर्तते ।
धनं च बहु वार्ष्णेय त्वत्प्रसादादुपार्जितम् ॥ १८
सोऽहमिच्छामि तत्सर्वं विधिवद्देवकीसुत ।
उपयोक्तुं द्विजाग्र्येभ्यो हव्यवाहे च माधव ॥ १९
तदहं यष्टुमिच्छामि दाशार्ह सहितस्त्वया ।
अनुजैश्च महाबाहो तन्माऽनुज्ञातुमर्हसि ॥ २०
तद्दीक्षापय गोविन्द त्वमात्मानं महाभुज ।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम् ॥ २१
मां वाप्यभ्यनुजानीहि सहैभिरनुजैर्विभो ।
अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमम् ॥ २२

वैशंपायन उवाच ।

तं कृष्णः प्रत्युवाचेदं बहूक्त्वा गुणविस्तरम् ।
त्वमेव राजशार्दूल सम्राडर्हो महाक्रतुम् ।
संप्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् ॥ २३
यजस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते ।
नियुङ्क्ष्व त्वं च मां कृत्ये सर्वं कर्तास्मि ते वचः ॥ २४

युधिष्ठिर उवाच ।

सफलः कृष्ण सङ्कल्पः सिद्धिश्च नियता मम ।
यस्य मे त्वं हृषीकेश यथेप्सितमुपस्थितः ॥ २५

वैशंपायन उवाच ।

अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह ।
ईजितुं राजसूयेन साधनान्युपचक्रमे ॥ २६
ततस्त्वाज्ञापयामास पाण्डवोऽरिनिबर्हणः ।
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥ २७
अस्मिन्क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।
तथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥ २८
अधियज्ञांश्च संभारान्धौम्योक्तान्क्षिप्रमेव हि ।
समानयन्तु पुरुषा यथायोगं यथाक्रमम् ॥ २९
इन्द्रसेनो विशोकश्च पूरुश्चार्जुनसारथिः ।
अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया ॥ ३०
सर्वकामाश्च कार्यन्तां रसगन्धसमन्विताः ।
मनोरथप्रीतिकरा द्विजानां कुरुसत्तम ॥ ३१

वैशंपायन उवाच ।

तद्वाक्यसमकालं च कृतं सर्वं न्यवेदयत् ।
सहदेवो युधां श्रेष्ठो धर्मराजे युधिष्ठिरे ॥ ३२
ततो द्वैपायनो राजन्नृत्विजः समुपानयत् ।
वेदानिव महाभागान्साक्षान्मूर्तिमतो द्विजान् ३३
स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः ।
धनञ्जयानामृषभः सुसामा सामगोऽभवत् ॥ ३४
याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्युसत्तमः ।
पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ३५
एतेषां पुत्रवर्गाश्च शिष्याश्च भरतर्षभ ।
बभूवुर्होत्रगाः सर्वे वेदवेदाङ्गपारगाः ॥ ३६
ते वाचयित्वा पुण्याहमूहयित्वा च तं विधिम् ।
शास्त्रोक्तं पूजयामासुस्तद्देवयजनं महत् ॥ ३७
तत्र चक्रुरनुज्ञाताः शरणान्युत शिल्पिनः ।
गन्धवन्ति विशालानि वेश्मानीव दिवौकसाम् ३८
तत आज्ञापयामास स राजा राजसत्तमः ।
सहदेवं तदा सद्यो मन्त्रिणं पुरुषर्षभः ॥ ३९
आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाशुगान्द्रुतम् ।
उपश्रुत्य वचो राज्ञः स दूतान्प्राहिणोत्तदा ॥ ४०
आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान्भूमिपानथ ।
विशश्च मान्याञ्शूद्रांश्च सर्वानानयतेति च ॥ ४१

वैशंपायन उवाच ।

ते सर्वान्पृथिवीपालान्पाण्डवेयस्य शासनात् ।
आमन्त्रयांबभूवुस्ते प्रेषयामास चापरान् ॥ ४२
दूताश्च वाहनैर्जग्मू राष्ट्राणि सुबहून्यपि ।

धनंजयानां धनंजयगोत्राणां मध्ये श्रेष्ठः सुसामानाम आङ्गिरसः ॥ ३४ ॥ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम् ॥४३
नकुलं हास्तिनपुरं भीष्माय भरतर्षभ ।
द्रोणाय धृतराष्ट्राय विदुराय कृपाय च ।
भ्रातॄणां चैव सर्वेषां येऽनुरक्ता युधिष्ठिरे ॥ ४४
ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम् ।
दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ॥ ४५
'ज्येष्ठामूले अमावास्यां मृगाजिनसमावृतः ।
रौरवाजिनसंवीतो नवनीताक्तदेहवान् ॥' ४६
दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः ।
जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ॥ ४७
भ्रातृभिर्ज्ञातिभिश्चैव सुहृद्भिः सचिवैः सह ।
क्षत्रियैश्च मनुष्येन्द्रैर्नानादेशसमागतैः ॥ ४८
अमात्यैश्च नरश्रेष्ठो धर्मो विग्रहवानिव ।
आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः ॥ ४९

सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः
तेषामावसथांश्चक्रुर्धर्मराजस्य शासनात् ॥ ५०
बह्वन्नाच्छादनैर्युक्तान्सगणानां पृथक् पृथक् ।
सर्वर्तुगुणसंपन्नाञ्शिल्पिनोऽथ सहस्रशः ॥ ५१
तेषु ते न्यवसन्राजन्ब्राह्मणा नृपसत्कृताः ।
कथयन्तः कथा बह्वीः पश्यन्तो नटनर्तकान् ५२
भुञ्जतां चैव विप्राणां वदतां च महास्वनः ।
अनिशं श्रूयते तत्र मुदितानां महात्मनाम् ॥ ५३
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकाराः संजल्पाः श्रूयन्तेस्मात्र नित्यशः ५४
गवां शतसहस्राणि शयनानां च भारत ।
रुक्मस्य योषितां चैव धर्मराजः पृथक् ददौ ५५
प्रावर्ततैवं यज्ञः स पाण्डवस्य महात्मनः ।
पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे ॥ ५६

॥ इति श्रीमन्महाभारते सभापर्वणि राजसूयपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आमन्त्रितानां सर्वेषां आगमनम् ॥ १ ॥

वैशंपायन उवाच ।
तत आमन्त्रिता राजन्राजानः सत्कृतास्तदा ।
पुरेभ्यः प्रययुस्तेभ्यो विमानेभ्य इवामराः ॥ १
ते वै दिग्भ्यः समापेतुः पार्थिवास्तत्र भारत ।
समादाय महार्हाणि रत्नानि विविधानि च ॥ २
तच्छ्रुत्वा धर्मराजस्य यज्ञे यज्ञविदस्तदा ।
राजानः शतशस्तुष्टैर्मनोभिर्मनुजर्षभ ॥ ३
बहु वित्तं समादाय विविधं पार्थिवा ययुः ।
द्रष्टुकामाः सभां चैव धर्मराजं च पाण्डवम् ॥ ४
स गत्वा हास्तिनपुरं नकुलः समितिञ्जयः ।
भीष्ममामन्त्रयाञ्चक्रे धृतराष्ट्रं च पाण्डवः ॥ ५
प्रयतः प्राञ्जलिर्भूत्वा भारतानानयत्तदा ।
धृतराष्ट्रं च भीष्मं च विदुरं च महामतिम् ॥ ६
दुर्योधनमुखांश्चैव भ्रातॄन्सर्वानथानयत् ॥ ७

सत्कृत्यामन्त्रिताः सर्वे ह्याचार्यप्रमुखास्ततः ।
प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरस्सराः ॥ ८
धृतराष्ट्रश्च भीष्मश्च विदुरश्च महामतिः ।
दुर्योधनपुरोगाश्च भ्रातरः सर्व एव ते ।
गान्धारराजः सुबलः शकुनिश्च महाबलः ॥ ९
अचलो वृषकश्चैव कर्णश्च रथिनां वरः ।
तथा शल्यश्च बलवान्बाह्लिकश्च महाबलः ॥ १०
सोमदत्तोऽथ कौरव्यो भूरिर्भूरिश्रवाः शलः ।
अश्वत्थामा कृपो द्रोणः सैन्धवश्च जयद्रथः ॥ ११
यज्ञसेनः सपुत्रश्च साल्वश्च वसुधाधिपः ।
प्राग्ज्योतिषश्च नृपतिर्भगदत्तो महारथः ॥ १२
स तु सर्वैः सह म्लेच्छैः सागरानूपवासिभिः ।
पार्वतीयाश्च राजानो राजा चैव बृहद्बलः ॥ १३
पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा ।

ब्रह्मपुरस्सराः ब्राह्मणपुरस्सराः ॥ ८ ॥

सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आकर्षाः कुन्तलाश्चैव गालवाश्चान्ध्रकास्तथा॥१४
द्राविडाः सिंहलाश्चैव राजा काश्मीरकस्तथा ।
कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः॥१५
बाह्लिकाश्चापरे शूरा राजानः सर्व एव ते ।
विराटः सह पुत्राभ्यां मावेल्लश्च महाबलः ॥ १६
राजानो राजपुत्राश्च नानाजनपदेश्वराः ।
शिशुपालो महावीर्यः सह पुत्रेण भारत ॥ १७
आगच्छत्पाण्डवेयस्य यज्ञं समरदुर्मदः ।
रामश्चैवानिरुद्धश्च कङ्कश्च सहसारणः ॥ १८
गदप्रद्युम्नसाम्बाश्च चारुदेष्णश्च वीर्यवान् ।
उल्मुको निशठश्चैव वीरश्चाङ्गावहस्तथा ॥ १९
वृष्णयो निखिलाश्चान्ये समाजग्मुर्महारथाः ।
एते चान्ये च बहवो राजानो मध्यदेशजाः॥२०
आजग्मुः पाण्डुपुत्रस्य राजसूयं महाक्रतुम् ।
ददुस्तेषामावसथान्धर्मराजस्य शासनात् ॥ २१
बहुभक्ष्यान्वितान्राजन्दीर्घिकावृक्षशोभितान् ।
तथा धर्मात्मजः पूजां चक्रे तेषां महात्मनाम्॥२२
सत्कृताश्च यथोदिष्टाञ्जग्मुरावसथान्नृपाः ।
कैलासशिखरप्रख्यान्मनोज्ञान्द्रव्यभूषितान्॥२३
सर्वतः संवृतानुच्चैः प्राकारैः सुकृतैः सितैः ।
सुवर्णजालसंवीतान्मणिकुट्टिमभूषितान् ॥ २४
सुखारोहणसोपानान्महासनपरिच्छदान् ।
स्रग्दामसमवच्छन्नानुत्तमागुरुगन्धिनः ॥ २५
हंसेन्दुवर्णसदृशानायोजनसुदर्शनान् ।
असंबाधान्समद्वारान्युतानुच्चावचैर्गुणैः ॥ २६
बहुधातुनिबद्धाङ्गान्हिमवच्छिखरानिव ।
विश्रान्तास्ते ततोऽपश्यन्भूमिपा भूरिदक्षिणम्॥२७
वृतं सदस्यैर्बहुभिर्धर्मराजं युधिष्ठिरम् ।
तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महर्षिभिः ।
भ्राजते स्म तदा राजन्नाकपृष्ठं यथाऽमरैः ॥२८

॥ इति श्रीमन्महाभारते सभापर्वणि राजसूयपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

आगतान्भीष्मादीन्संमान्य तत्तदधिकारेषु तेषांतेषां नियमनम् ॥ १ ॥ राजसूययागः ॥ २ ॥

वैशंपायन उवाच ।
पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः ।
अभिवाद्य ततो राजन्निदं वचनमब्रवीत् ॥ १
भीष्मं द्रोणं कृपं द्रौणिं दुर्योधनविविंशती ।
अस्मिन्यज्ञे भवन्तो मामनुगृह्णन्तु सर्वशः ॥ २
इदं वः सुमहच्चैव यदिहास्ति धनं मम ।
प्रणयन्तु भवन्तो मां यथेष्टमभिमन्त्रिताः ॥ ३
एवमुक्त्वा स तान्सर्वान्दीक्षितः पाण्डवाग्रजः ।
युयोज स यथायोगमधिकारेष्वनन्तरम् ॥ ४
'पङ्क्त्यारोपणकार्ये च उच्छिष्टापनये पुनः ।
भोजनावेक्षणे चैव युयुत्सुं समयोजयत् ॥' ५
भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत् ।
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् ॥ ६
राज्ञां तु प्रतिपूजार्थं सञ्जयं स न्ययोजयत् ।
कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती ॥ ७
हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे ।
दक्षिणानां च वै दाने कृपं राजा न्ययोजयत्॥८
तथाऽन्यान्पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्न्ययोजयत् ।
बाह्लिको धृतराष्ट्रश्च सोमदत्तो जयद्रथः ।
नकुलेन समानीताः स्वामिवत्तत्र रेमिरे ॥ ९
क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित् ।
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ॥ १०
'कुन्ती साध्वी च गान्धारी स्त्रीणां कुर्वन्ति चार्चनं ।
अन्याः सर्वाः स्नुषास्तासां सन्देशं यान्तु माचिरं ।
तिष्ठेत्कृष्णान्तिके सोयमर्जुनः कार्यसिद्धये ।।'११
चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत् ।
सर्वलोकसमावृत्तः पिप्रीषुः फलमुत्तमम् ॥ १२
द्रष्टुकामः सभां चैव धर्मराजं युधिष्ठिरम् ।
न कश्चिदाहरत्तत्र सहस्रावरमर्हणम् ॥ १३
रत्नैश्च बहुभिस्तत्र धर्मराजमवर्धयत् ।

कथं तु मम कौरव्यो रत्नदानैः समाप्नुयात् ॥१४
यज्ञमित्येव राजानः स्पर्धमाना ददुर्धनम् ।
भवनैः सविमानाग्रैः सोदर्कैर्बलसंवृतैः ॥ १५
लोकराजविमानैश्च ब्राह्मणावसथैः सह ।
कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा ॥ १६
विचित्रै रत्नवद्भिश्च ऋद्ध्या परमया युतैः ।
राजभिश्च समावृत्तैरतीव श्रीसमृद्धिभिः ।
अशोभत सदो राजन्कौन्तेयस्य महात्मनः ॥१७
ऋद्ध्या तु वरुणं देवं स्पर्धमानो युधिष्ठिरः ।
षडग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता ॥ १८
सर्वाञ्जनान्सर्वकामैः समृद्धैः समतर्पयत् ।
अन्नवान्बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।
रत्नोपहारसंपन्नो बभूव स समागमः ॥ १९
इडाज्यहोमाहुतिभिर्मन्त्रशिक्षाविशारदैः ।
तस्मिन्हि ततृपुर्देवास्तते यज्ञे महर्षिभिः ॥ २०
यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः ।
ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदाऽन्विताः ॥२१

॥ इति श्रीमन्महाभारते सभापर्वणि राजसूयपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ समाप्तं च राजसूयपर्व ॥

---

# (अथार्घाहरणपर्व ॥ ५ ॥)

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

अभिषेचनदिने ब्राह्मणादीनामन्तर्वेदिप्रवेशः ॥ १ ॥ भूभारक्षपणे नारदचिन्तनम् ॥ २ ॥ पूर्वं संक्षिप्योक्तायाः कृष्णागमनकथायाः किंचिद्विस्तरेण कथनम् ॥ ३ ॥ सहदेवेन भीष्माज्ञया श्रीकृष्णस्याग्रपूजाकरणम् ॥ ४ ॥ शिशुपालेन श्रीकृष्णस्याग्रपूजाऽसहनम् ॥ ५ ॥

वैशंपायन उवाच ।
ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अन्तर्वेदीं प्रविविशुः सत्कारार्हा महर्षयः ॥ १
नारदप्रमुखास्तस्यामन्तर्वेद्यां महात्मनः ।
समासीनाः शुशुभिरे सहराजर्षिभिस्तदा ॥ २
समेता ब्रह्मभवने देवा देवर्षयस्तथा ।
कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ॥ ३
एवमेतन्न चाप्येवमेवं चैतन्न चान्यथा ।
इत्यूचुर्बहवस्तत्र वितण्डां वै परस्परम् ॥ ४
कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्वते ।
अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चयैः ॥ ५
तत्र मेधाविनः केचिदर्थमन्यैरुदीरितम् ।
विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् ॥ ६
केचिद्धर्मार्थकुशलाः केचित्तत्र महाव्रताः ।
रेमिरे कथयन्तश्च सर्वभाष्यविदां वराः ॥ ७
सा वेदिर्वेदसंपन्नैर्देवद्विजमहर्षिभिः ।
आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवायता ॥ ८
न तस्यां सन्निधौ शूद्रः कश्चिदासीन्न चाव्रती ।
अन्तर्वेद्यां तदा राजन्युधिष्ठिरनिवेशने ॥ ९
तां तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानजाम् ।
तुतोष नारदः पश्यन्धर्मराजस्य धीमतः ॥ १०
अथ चिन्तां समापेदे स मुनिर्मनुजाधिप ।
नारदस्तु तदा पश्यन्सर्वक्षत्रसमागमम् ॥ ११
सस्मार च पुरावृत्तां कथां तां पुरुषर्षभ ।
अंशावतरणे याऽसौ ब्रह्मणो भवनेऽभवत् ॥ १२
देवानां संगमं तं तु विज्ञाय कुरुनन्दन ।
नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् ॥ १३
साक्षात्स विबुधारिघ्नः क्षत्रे नारायणो विभुः ।
प्रतिज्ञां पालयंश्चेमां जातः परपुरंजयः ॥ १४
सन्दिदेश पुरा योऽसौ विबुधान्भूतकृत्स्वयम् ।
अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥१५
इति नारायणः शंभुर्भगवान्भूतभावनः ।
आदिश्य विबुधान्सर्वानजायत यदुक्षये ॥ १६
क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः ।

परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट्॥१७
यस्य बाहुबलं सेन्द्राः सुराः सर्व उपासते ।
सोयं मानुषवन्नाम हरिरास्तेऽरिमर्दनः ॥ १८
अहो बत महद्भूतं स्वयंभूर्यदिदं स्वयम् ।
आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् ॥ १९
इत्येतां नारदश्चिन्तां चिन्तयामास सर्ववित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरीज्यं तमीश्वरम् ॥२०
तस्मिन्धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः ।
महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः ॥ २१
'ततः समुदिता मुख्यैर्गुणैर्गुणवतां वराः ।
बहवो भावितात्मानः पृथक्पृथगरिन्दमाः ॥२२
आत्मकृत्यमिति ज्ञात्वा पाञ्चालास्तत्र सर्वशः ।
समीयुर्वृष्णयश्चैव तदाऽनीकाग्रहारिणः ॥ २३
सदाराः सजनामात्या वहन्तो रत्नसंचयान् ।
विकृष्टत्वाच्च देशस्य गुरुभारतया च ते ॥ २४
ययुः प्रमुदिताः पश्चाद्भगवन्तं समन्वयुः ।
बलशेषं समुदितं परिगृह्य समन्ततः ॥ २५
अजश्चक्रायुधः शौरिरमित्रगणमर्दनः ।
बलाधिकारे निक्षिप्य संमान्यानकदुन्दुभिम् ॥२६
संप्रायाद्यादवश्रेष्ठो यजमाने युधिष्ठिरे ।
उच्चावचमुपादाय धर्मराजाय माधवः ॥ २७
धनौघं पुरतः कृत्वा खाण्डवप्रस्थमाययौ ।
तत्र यज्ञागतान्पश्यंश्चैद्यवर्गसमागतान् ॥ २८
भूमिपालगणान्सर्वान्सप्रभानिव तोयदान् ।
मेघकायान्निवसतो यूथपानिव यूथपः ॥ २९
बलिनः सिंहसङ्काशान्महीमावृत्य तिष्ठतः ।
ततो जनौघसंबाधं राजसागरमव्ययम् ॥ ३०
नादयन्रथघोषेण ह्युपायान्मधुसूदनः ।
असूर्यमिव सूर्येण निवातमिव वायुना ॥ ३१
कृष्णेन समुपेतेन जहर्षे भारतं पुरम् ।
ब्राह्मणक्षत्रियाणां तु पूजार्थं ह्यर्थधर्मवित् ॥ ३२
सहदेवो विशेषज्ञो माद्रीपुत्रः कृतोऽभवत् ।
भगवन्तं तु भूतानां भास्वन्तमिव तेजसा ॥ ३३
विशन्तं यज्ञभूमिं तां सितस्यावरजं प्रभुम् ।
तेजोराशिमृषिं विप्रमदृश्यं वै विजानताम् ॥ ३४
वयोधिकानां वृद्धानां मार्गमात्मनि तिष्ठताम् ।
जगतस्तस्थुषश्चैव प्रभवाप्ययमच्युतम् ॥ ३५
अनन्तमन्तं शत्रूणाममित्रगणमर्दनम् ।
प्रभवं सर्वभूतानामापत्स्वभयमच्युतम् ॥ ३६
भविष्यं भावनं भूतं द्वारवत्यामरिन्दमम् ।
स दृष्ट्वा कृष्णमायान्तं प्रतिपूज्यामितौजसम्॥३७
यथार्हं केशवे वृत्तिं प्रत्यपद्यत पाण्डवः ।
ज्यैष्ठ्यकानिष्ठ्यसंयोगं संप्रधार्य गुणागुणैः॥३८
आरिराधयिषुर्धर्मः पूजयित्वा द्विजोत्तमान् ।
महदादित्यसङ्काशमासनं च जगत्पतेः ।
ददौ नासादितं कैश्चित्तस्मिन्नुपविवेश सः ॥' ३९
ततो भीष्मोऽब्रवीद्राजन्धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ ४०
आचार्यमृत्विजं चैव संयुजं च युधिष्ठिर ।
स्नातकं च प्रियं प्राहुः षडर्घार्हान्नृपं तथा ॥४१
एतानर्घ्यानभिगतानाहुः संवत्सरोषितान् ।
त इमे कालपूगस्य महतोऽस्मानुपागताः ॥ ४२
एषामेकैकशो राजन्नर्घ आनीयतामिति ।
अथ चैषां वरिष्ठाय समर्थायोपनीयताम् ॥ ४३
युधिष्ठिर उवाच ।
कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनन्दन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥४४
वैशंपायन उवाच ।
ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्यवान्।
वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ॥ ४५
भीष्म उवाच ।
एष ह्येषां समस्तानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः॥४६
असूर्यमिव सूर्येण निर्वातमिव वायुना ।
भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः॥४७
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् ।
उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घ्यमुत्तमम् ॥ ४८

संयुजं संबन्धिनं श्वशुरादिम् । प्रियं मित्रम् ॥ ४१ ॥

'गामर्घ्यं मधुपर्कं च ह्यानीयोपाहरत्तदा ।
एतस्मिन्नन्तरे राजन्निदमासीत्तदाऽद्भुतम् ॥ ४९
तां दृष्ट्वा क्षत्रियाः सर्वे पूजां कृष्णस्य भूयसीम् ।
संप्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ॥'५०
प्रतिजग्राह तां कृष्णः शास्त्रदृष्टेन कर्मणा ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ ५१
उपालभ्य स भीष्मं च धर्मराजं च संसदि ।
अवाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ ५२
'तेषामाकारभावज्ञः सहदेवो न चक्षमे ।
मानिनां बलिनां राज्ञां पुरः सन्दर्शिते पदे ॥५३
पुष्पवृष्टिर्महत्यासीत्सहदेवस्य मूर्धनि ।
जन्मप्रभृति वृष्णीनां सुनीथः शत्रुरब्रवीत् ॥ ५४
भ्रष्टा वियोनिजो राजा प्रतिवक्ता नदीसुतः ।
प्रतिग्रहीता गोपालः प्रदाता च वियोनिजः ॥५५
सदस्या मूकवत्सर्वे आसतेऽत्र किमुच्यते ।
इत्युक्त्वा स विहस्याशु पाण्डवं पुनरब्रवीत् ॥५६
अतिपश्यसि वा सर्वान्न वा पश्यसि पाण्डव ।
तिष्ठत्स्वन्येषु पूज्येषु गोपमर्चितवानसि ॥ ५७
एते चैवोभये तात कार्यस्य तु विनाशके ।
अतिदृष्टिरदृष्टिर्वा तयोः किं त्वं समास्थितः ॥'५८

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः ॥ ४० ॥

शिशुपालेन अनेकधा कृष्णोपालम्भनपूर्वकं सभातो निर्गमनम् ॥ १ ॥

शिशुपाल उवाच ।
नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत्पार्थिवार्हणम् ॥ १
नायं युक्तः समाचारः पाण्डवेषु महात्मसु ।
यत्कामाद्देवकीपुत्रं पाण्डवार्चितवानसि ॥ २
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।
अयं तत्राभ्यतिक्रान्तो ह्यापगेयोऽल्पदर्शनः ॥ ३
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।
भवत्यभ्यधिकं भीष्मो लोकेष्ववमतः सताम् ॥ ४
कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ॥ ५
अथवा मन्यसे कृष्णं स्थविरं कुरुपुङ्गव ।
वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ॥ ६
अथवा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान् ।
द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम् ॥ ७
आचार्यं मन्यसे कृष्णमथवा कुरुनन्दन ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ ८
ऋत्विजं मन्यसे कृष्णमथवा कुरुनन्दन ।
द्वैपायने स्थिते वृद्धे कथं कृष्णोऽर्चितस्त्वया ॥ ९
भीष्मे शान्तनवे राजन्स्थिते पुरुषसत्तमे ।
स्वच्छन्दमृत्युके राजन्कथं कृष्णोऽर्चितस्त्वया १०
अश्वत्थाम्नि स्थिते वीरे सर्वशास्त्रविशारदे ।
कथं कृष्णस्त्वया राजन्नर्चितः कुरुनन्दन ॥ ११
दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे ।
कृपे च भारताचार्ये कथं कृष्णस्त्वयाऽर्चितः १२
द्रुमं किंपुरुषाचार्यमतिक्रम्य तथाऽर्चितः ।
भीष्मके चैव दुर्धर्षे पाण्डुवत्कृतलक्षणे ॥ १३
नृपे च रुक्मिणि श्रेष्ठे एकलव्ये तथैव च ।
शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयार्चितः ॥ १४
अयं च सर्वराज्ञां वै बलश्लाघी महाबलः ।
जामदग्न्यस्य दयितः शिष्यो विप्रस्य भारत ॥ १५
येनात्मबलमाश्रित्य राजानो युधि निर्जिताः ।
तं च कर्णमतिक्रम्य कथं कृष्णस्त्वयार्चितः ॥ १६
नैवर्त्विङ्नैव चाचार्यो न राजा मधुसूदनः ।
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥ १७
अथवाऽभ्यर्चनीयोऽयं युष्माकं मधुसूदनः ।

---

अवाक्षिपद्दूषितवान् ॥ ५२ ॥

ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥

किं राजभिरिहानीतैरवमानाय भारत ॥ १८
वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छामः करान्सर्वे न लोभान्न च सान्त्वनात् १९
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥ २०
किमन्यदवमानाद्धि यदेनं राजसंसदि ।
अप्राप्तलक्षणं कृष्णमर्घ्येणार्चितवानसि ॥ २१
अकस्माद्धर्मपुत्रस्य धर्मात्मेति यशो गतम् ।
को हि धर्मच्युते पूजामेवं युक्तां नियोजयेत्॥२२
योयं वृष्णिकुले जातो राजानं हतवान्पुरा ।
जरासन्धं महात्मानमन्यायेन दुरात्मवान् ॥ २३
अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् ।
दर्शितं कृपणत्वं च कृष्णेऽर्घ्यस्य निवेदनात्॥२४
यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः ।
ननु त्वयाऽपि बोद्धव्यं यां पूजां माधवार्हसि २५
अथवा कृपणैरेतामुपनीतां जनार्दन ।
पूजामनर्हः कस्मात्त्वमभ्यनुज्ञातवानसि ॥ २६
अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे ।
हविषः प्राप्य निष्यन्दं प्राशिता श्वेव निर्जने॥२७
न त्वयं पार्थिवेन्द्राणामपमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन ॥ २८
क्लीबे दारक्रिया यादृगन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत्पूजा तथा ते मधुसूदन ॥ २९
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ ३०
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा ॥ ३१

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

शिशुपालं सान्त्वयन्तं युधिष्ठिरं निवार्य भीष्मेण श्रीकृष्णमाहात्म्यकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः ॥ १
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ।
अधर्मश्च परो राजन्पारुष्यं च निरर्थकम् ॥ २
न हि धर्मं परं जातु नावबुध्येत पार्थिवः ।
भीष्मः शान्तनवस्त्वेनं मावमंस्थास्त्वमन्यथा॥३
पश्य चैतान्महीपालांस्त्वत्तो वृद्धतरान्बहून् ।
मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ॥ ४
वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥ ५
भीष्म उवाच ।
नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ॥ ६
क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥७
अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ ८
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥ ९
कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत्सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम्॥ १०
तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्चाम नेतरान् ।
एवं वक्तुं न चार्हस्त्वं मा तेऽभूद्बुद्धिरीदृशी ॥ ११
ज्ञानवृद्धा मया राजन्बहवः पर्युपासिताः ।
'यस्य राजन्प्रभावज्ञाः पुरा सर्वे च रक्षिताः ।'
तेषां कथयतां शौरेरहं गुणवतो गुणान् ॥ १२
समागतानामश्रौषं बहून्बहुमतान्सताम् ।
कर्माण्यपि च यान्यस्य जन्मप्रभृति धीमतः॥१३
बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे ।

न केवलं वयं कामाच्चेदिराज जनार्दनम् ॥ १४
न संबन्धं पुरस्कृत्य कृतार्थं वा कथंचन ।
अर्चामहेऽर्चितं सद्भिर्भुवि भूतसुखावहम् ॥ १५
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुञ्ज्महे ।
न च कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः॥१६
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः ।
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः॥१७
वैश्यानां धान्यधनवाञ्शूद्राणामेव जन्मतः ।
पूज्यतायां च गोविन्दे हेतू द्वावपि संस्थितौ १८
वेदवेदाङ्गविज्ञानं बलं चाभ्यधिकं तथा ।
नृणां लोके हि कोऽन्योस्ति विशिष्टः केशवादृते १९
दानं दाक्ष्यं श्रुतं शौर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा ।
संनतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताऽच्युते २०
तमिमं लोकसंपन्नमाचार्यं पितरं गुरुम् ।
अर्घ्यमर्चितमर्चामः सर्वे संक्षन्तुमर्हथ ॥ २१
ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः ।
सर्वमेतद्धृषीकेशस्तस्मादभ्यर्चितोऽच्युतः ॥ २२
कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते विश्वमिदं भूतं चराचरम् ॥२३
एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः ।
परश्च सर्वभूतेभ्यस्तस्मात्पूज्यतमोऽच्युतः ॥ २४
बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या ।
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ २५
आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये ।
दिशश्च विदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ २६
'एष रुद्रश्च सर्वात्मा ब्रह्मा चैव सनातनः ।
अक्षरं क्षररूपेण मानुषत्वमुपागतः ॥' २७
अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखम् ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ॥२८
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम् ।
पर्वतानां मुखं मेरुर्गरुडः पततां मुखम् ॥ २९
ऊर्ध्वं तिर्यगधश्चैव यावती जगतो गतिः ।
सदेवकेषु लोकेषु भगवान्केशवो मुखम् ॥ ३०
अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ ३१
यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान्नरः ।
स वै पश्येद्यथा धर्मं न तथा चेदिराडयम् ॥३२
सवृद्धबालेष्वथवा पार्थिवेषु महात्मसु ।
को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत् ॥३३
अथैनां दुष्कृतां पूजां शिशुपालो व्यवस्यति ।
दुष्कृतायां यथान्यायं तथाऽयं कर्तुमर्हति ॥ ३४

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

'श्रीकृष्णस्याग्रपूजामसहमानानां शिरसि पदमाहितमिति सहदेववचनश्रवणेन शिशुपालस्य कोपोदयः ॥ १ ॥

'वैशंपायन उवाच ।
गाङ्गेयेनैवमुक्तस्तु शिशुपालश्चुकोप तम् ।
क्रुद्धं सुनीथं दृष्ट्वाऽथ सहदेवोऽब्रवीत्तदा ॥ १
मतिपूर्वमिदं सर्वं चेदिराज मया कृतम् ।
तन्मे निगदतस्त्वं कारणादत्र मे शृणु ॥ २
स पार्थिवानां सर्वेषां गुरुः कृष्णोऽपरो न हि ।
तस्मादभ्यर्चितोऽस्माभिः सर्वे संमन्तुमर्हथ ॥ ३
यो वा न सहते कश्चिद्राज्ञां सबलवाहनः ।
क्षिप्रं युद्धाय निर्यातु तस्य मूर्ध्न्याहितं पदम् ॥ ४
एवमुक्तो मया हेतुरुत्तरं प्रब्रवीतु मे ।
वैशंपायन उवाच ।
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ॥ ५
मानिनां बलिनां राज्ञां मध्ये संदर्शिते पदे ।
एवमुक्ते सुनीथस्य सहदेवेन केशवे ॥ ६
स्वभावरक्ते नयने कोपाद्रक्ततरे कृते ।
तस्य कोपं समुद्भूतं ज्ञात्वा भीष्मः प्रतापवान् ॥७

चतुर्विधं जरायुजादि भौतिकम् ॥ २५ ॥

एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

आचचक्षे पुनस्तस्मै कृष्णस्यैवोत्तरान्गुणान् ।
स सुनीथं समामन्त्र्य तांश्च सर्वान्महीक्षितः ॥ ८
उवाच वदतां श्रेष्ठ इदं मतिमतां वरः ।
सहदेवेन राजानो यदुक्तं केशवं प्रति ।
तत्तथेति विजानीध्वं भूयश्चात्र विबोधत ॥ ९

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

श्रीकृष्णमहिम्नो विस्तरेण कथनाय भीष्मंप्रति युधिष्ठिरप्रार्थना ॥ १ ॥ भीष्मेण विष्णोर्जगत्सृष्टिकथाकथनम् ॥ २ ॥

वैशंपायन उवाच ।
ततो भीष्मस्य तच्छ्रुत्वा वचः काले युधिष्ठिरः ।
ज्ञापनार्थाय सर्वेषां भीष्मं पुनरथाब्रवीत् ॥ १
विस्तरेणास्य देवस्य कर्माणीच्छामि सर्वशः ।
श्रोतुं भगवतस्तानि प्रब्रवीहि पितामह ॥ २
कर्मणामानुपूर्वीं च प्रादुर्भावाश्च ये विभोः ।
यथा च प्रकृतिः कृष्णे तन्मे ब्रूहि पितामह ॥ ३
एवमुक्तस्तदा भीष्मः प्रोवाच भरतर्षभ ।
युधिष्ठिरममित्रघ्नं तस्मिन्राजसमागमे ॥ ४
समक्षं वासुदेवस्य देवस्येव शतक्रतोः ।
कर्माण्यसुकराण्यन्यैराचचक्षे जनाधिप ॥ ५
शृण्वतां पार्थिवानां च धर्मराजस्य चान्तिके ।
इदं मतिमतां श्रेष्ठः कृष्णं प्रति विशांपते ॥ ६
नाम्नैवामन्त्र्य राजेन्द्र चेदिराजमरिन्दमम् ।
भीमकर्मा ततो भीष्मो भूयः स इदमब्रवीत् ॥ ७
कुरूणामपि राजानं युधिष्ठिरमभाषत ।
भीष्म उवाच ।
वर्तमानामतीतां च शृणु राजन्युधिष्ठिर ॥ ८
ईश्वरस्योत्तमस्यैनां कर्मणां गहनां गतिम् ।
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ॥ ९
पुरा नारायणो देवः स्वयंभूः प्रपितामहः ।
सहस्रशीर्षः पुरुषो ध्रुवोऽनन्तः सनातनः ॥ १०
सहस्रास्यः सहस्राक्षः सहस्रचरणो विभुः ।
सहस्रबाहुः सर्वज्ञो देवो नामसहस्रवान् ॥ ११
सहस्रमुकुटो देवो विश्वरूपो महाद्युतिः ।
अनेकवर्णो देवादिरव्यक्ताद्वै परे स्थितः ॥ १२
असृजत्सलिलं पूर्वं स च नारायणः प्रभुः ।
ततस्तु भगवांस्तोये ब्रह्माणमसृजत्स्वयम् ॥ १३
ब्रह्मा चतुर्मुखो लोकान्सर्वांस्तानसृजत्स्वयम् ।
आदिकाले पुरा ह्येवं सर्वलोकस्य चोद्भवः ।
पुरा यः प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ॥ १४
ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ।
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ॥ १५
एकस्तिष्ठति सर्वात्मा स तु नारायणः प्रभुः ।
नारायणस्य चाङ्गानि सर्वदैवानि भारत ॥ १६
शिरस्तस्य दिवं राजन्नाभिः खं चरणौ मही ।
अश्विनौ कर्णयोर्देवौ चक्षुषी शशिभास्करौ॥ १७
इन्द्रवैश्वानरौ देवौ मुखं तस्य महात्मनः ।
अन्यानि सर्वदैवानि सर्वाङ्गानि महात्मनः॥ १८
सर्वं चापि हरौ संस्थं सूत्रे मणिगणा इव ।
आभूतसंप्लवान्तेऽथ दृष्ट्वा सर्वं तमोन्वितम् ॥१९
नारायणो महायोगी सर्वज्ञः परमात्मवान् ।
ब्रह्मभूतस्तदात्मानं ब्रह्माणमसृजत्स्वयम् ॥ २०
सोऽध्यक्षः सर्वभूतानां प्रभूतप्रभवोऽच्युतः ।
सनत्कुमारं रुद्रं च सप्तर्षींश्च तपोधनात् ॥ २१
सर्वमेवासृजद्ब्रह्मा तथा लोकांस्तथा प्रजाः ।
ते च तद्व्यसृजंस्तत्र प्राप्तकाले युधिष्ठिर ॥ २२
तेभ्योऽभवन्महात्मभ्यो बहुधा ब्रह्म शाश्वतम् ।
कल्पानां बहुकोट्यश्च समतीतास्तु भारत ॥ २३
आभूतसंप्लवाश्चैव बहुधाऽद्धाऽपचक्रमुः ।
मन्वन्तरयुगा राजन्संकल्पो भूतसंप्लवाः ॥ २४
चक्रवत्परिवर्तन्ते सर्वं विषमुखं जगत् ।
सृष्ट्वा चतुर्मुखं देवं देवो नारायणः प्रभुः ॥ २५

विषमुखं जलादिकम् ॥ २५ ॥ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः ।
ब्रह्मा च सर्वलोकानां लोकस्य च पितामहः ॥२६
ततो नारायणो देवः सर्वस्य प्रपितामहः ।

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

मधुकैटभवधकथनम् ॥ १ ॥

भीष्म उवाच ।
अव्यक्तो व्यक्तलिङ्गस्थो य एव भगवान्प्रभुः ।
नरनारायणो भूत्वा हरिरासीद्युधिष्ठिर ॥ १
ब्रह्मा च शक्रः सूर्यश्च धर्मश्चैव सनातनः ।
बहुशः सर्वभूतात्मा प्रादुर्भवति कार्यतः ।
प्रादुर्भावांस्तु वक्ष्यामि दिव्यान्देवगणैर्युतान् ॥२
सुप्त्वा युगसहस्रं स प्रादुर्भवति कार्यवान् ।
अनेकबहुसाहस्रैर्देवदेवो जगत्पतिः ॥ ३
ब्रह्माणं कपिलं चैव परमेष्ठिं तथैव च ।
देवान्सप्तर्षिभिश्चैव शङ्करं च महायशाः ॥ ४
सनत्कुमारं भगवान्मनुं चैव प्रजापतिम् ।
पुरा चक्रे च देवादिः प्रदीप्ताग्निसमप्रभः ॥ ५
येन चार्णवमध्यस्थौ नष्टे स्थावरजङ्गमे ।
नष्टदेवासुरवरे प्रनष्टोरगराक्षसे ॥ ६
योद्धुकामौ सुदुर्धर्षौ भ्रातरौ मधुकैटभौ ।
हतौ भगवता तेन ततो दत्त्वा वरं परम् ॥ ७
भूमिं बद्ध्वा कृतौ पूर्वावजेयौ द्वौ महाऽसुरौ ।
तौ कर्णमलसंभूतौ विष्णोस्तस्य महात्मनः ॥ ८
महार्णवे प्रस्वपतः शैलराजसमौ स्थितौ ।
तौ विवेश स्वयं वायुर्ब्रह्मणा साधु चोदितः ॥ ९
तौ दिवं छादयित्वा तु ववृधाते महाऽसुरौ ।
वायुप्रमाणौ तौ दृष्ट्वा ब्रह्मा पर्यमृशच्छनैः ॥ १०
एकं मृदुतरं वेत्ति कठिनं वेत्ति चापरम् ।
नामनी तु तयोश्चक्रे सविता सलिलोद्भवः ॥११
मृदुस्त्वयं मधुर्नाम कठिनः कैठभः स्वयम् ।
तौ दैत्यौ कृतनामानौ चेरतुर्बलगर्वितौ ॥ १२
तौ पुराऽथ दिवं सर्वां प्राप्तौ राजन्महासुरौ ।
प्रच्छाद्याथ दिवं सर्वां चेरतुर्मधुकैठभौ ॥ १३
सर्वमेकार्णवं लोकं योद्धुकामौ सुनिर्भयौ ।
तौ गतावसुरौ दृष्ट्वा ब्रह्मा लोकपितामहः ॥ १४
एकार्णवाम्बुनिचये तत्रैवान्तरधीयत ।
स पद्मात्पद्मनाभस्य नाभिदेशात्समुत्थितात् ॥१५
आससाद स्वयं जन्म तत्पङ्कजमपङ्कजम् ।
पूजयामास वसतिं ब्रह्मा लोकपितामहः ॥ १६
तावुभौ जलगर्भस्थौ नारायणचतुर्मुखौ ।
बहून्वर्षायुतानप्सु शयानौ न च कम्पितौ ॥१७
अथ दीर्घस्य कालस्य तावुभौ मधुकैठभौ ।
आजग्मतुस्तौ तं देशं यत्र ब्रह्मा व्यवस्थितः ॥१८
तौ दृष्ट्वा लोकनाथस्तु रोषात्संरक्तलोचनः ।
उत्पपाताथ शयनात्पद्मनाभो महाद्युतिः ॥ १९
तद्युद्धमभवद्घोरं तयोस्तस्य च भारत ।
एकार्णवे तदा घोरे त्रैलोक्ये जलतां गते ॥ २०
तदभूत्तुमुलं युद्धं वर्षसङ्ख्यासहस्रशः ।
न च तावसुरौ युद्धे तदा श्रममवापतुः ॥ २१
अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ ।
ऊचतुः प्रीतमनसौ देवं नारायणं प्रभुम् ॥ २२
प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः ।
आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ॥२३
हतौ च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम ।
यो ह्यावां युधि निर्जेता तस्यावां विहितौ सुतौ ॥२४
तयोस्तु वचनं श्रुत्वा तदा नारायणः प्रभुः ।
तौ प्रगृह्य मृधे दैत्यौ दोर्भ्यां च समपीडयत् ॥२५
ऊरुभ्यां निधनं चक्रे तावुभौ मधुकैठभौ ।
तौ हतौ चाप्लुतौ तोये वपुर्भ्यामेकतां गतौ ॥२६
मेदो मुमुचतुर्दैत्यौ मज्जमानौ जलोर्मिभिः ।
मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे तदा ॥२७

नारायणश्च भगवानसृजद्द्विविधाः प्रजाः ।
दैत्ययोर्मेदसा छन्ना सर्वा राजन्वसुन्धरा ॥ २८
तदाप्रभृति कौन्तेय मेदिनीति स्मृता मही ।
प्रभावात्पद्मनाभस्य शाश्वती च कृता नृणाम् ॥ २९

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

वराहावतारकथनम् ॥ १ ॥

भीष्म उवाच ।
प्रादुर्भावसहस्राणि समतीतान्यनेकशः ।
यथाशक्ति तु वक्ष्यामि शृणु तान्कुरुनन्दन ॥ १
पुरा कमलनाभस्य स्वपतः सागराम्भसि ।
पुष्करे यत्र संभूता देवा ऋषिगणैः सह ॥ २
एष पौष्करिको नाम प्रादुर्भावः प्रकीर्तितः ।
पुराणैः कथ्यते यत्र वेदश्रुतिसमाहितः ॥ ३
वाराहस्तु श्रुतिमुखः प्रादुर्भावो महात्मनः ।
यत्र विष्णुः सुरश्रेष्ठो वाराहं रूपमास्थितः ॥ ४
उज्जहार महीं तोयात्सशैलवनकाननाम् ।
वेदपादो यूपदंष्ट्रः क्रतुर्दन्तश्चितीमुखः ॥ ५
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ।
अहोरात्रेक्षणो दिव्यो वेदाङ्गः श्रुतिभूषणः ॥ ६
आज्यनासः स्रुवं तुण्डं सामघोषस्वनो महान् ।
धर्मसत्यमयः श्रीमान्कर्मविक्रमसत्कृतः ॥ ७
प्रायश्चित्तमुखो धीरः पशुजानुर्महावृषः ।
औद्गात्रहोमलिङ्गोऽसौ पशुबीजमहौषधिः ॥ ८
बाह्यान्तरात्मा मन्त्रास्थिविकृतः सौम्यदर्शनः ।
वेदिस्कन्धो हविर्गन्धो हव्यकव्याभिवेगवान् ॥ ९
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरूर्जितः ।
दक्षिणाहृदयो योगी महाशास्त्रमयो महान् ॥ १०
उपाकर्मोष्ठरुचकः प्रावर्ग्यावर्तभूषणः ।
शालापत्नीसहायो वै मणिशृङ्गसमुच्छ्रितः ॥ ११
एवं यज्ञवराहो वै भूत्वा विष्णुः सनातनः ।
महीं सागरपर्यन्तां सशैलवनकाननाम् ॥ १२
एकार्णवजले भ्रष्टामेकार्णवगतः प्रभुः ।
मज्जन्तीं सलिले तस्मिन्स्वदेवीं पृथिवीं तदा ॥ १३
उज्जहार विषाणेन मार्कण्डेयस्य पश्यतः ।
शृङ्गेण यः समुद्धृत्य लोकानां हितकाम्यया ॥ १४
सहस्रशीर्षो देवेशो निर्ममे जगतीं प्रभुः ।
एवं यज्ञवराहेण भूतभव्यभवात्मना ॥ १५
उद्धृता पृथिवी देवी पूज्या वै सागराम्बरा ।
निहता दानवाः सर्वे देवदेवेन विष्णुना ॥ १६
वाराहः कथितो ह्येष नारसिंहमथो शृणु ।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः ॥ १७

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

हिरण्यकशिपुना समुद्रे तपश्चरणम् ॥ १ ॥ तपःप्रसन्नेन ब्रह्मणा तस्मै वरदानम् ॥ २ ॥ तस्य वरप्राप्त्या भीतानां देवानां ब्रह्मणा परिसान्त्वनम् ॥ ३ ॥ हिरण्यकशिपुना त्रैलोक्यपीडने आत्मानं शरणं गतानां देवानां श्रीहरिणाऽभयप्रदानम् ॥ ४ ॥ नृसिंहरूपिणा हरिणा हिरण्यकशिपुहननम् ॥ ५ ॥

भीष्म उवाच ।
दैत्येन्द्रो बलवान्राजन्सुरारिर्बलगर्वितः ।
हिरण्यकशिपुर्नाम आसीत्त्रैलोक्यकण्टकः ॥ १
दैत्यानामादिपुरुषो वीर्येणाप्रतिमो बली ।
प्रविश्य जलधिं राजंश्चकार तप उत्तमम् ॥ २
दशवर्षसहस्राणि शतानि दश पञ्च च ।

व्रतोपवासतस्तस्थौ स्थाणुर्मौनव्रतो दृढः ॥ ३
ततः शमदमाभ्यां च ब्रह्मचर्येण चानघ ।
ब्रह्मा प्रीतमनास्तस्य तपसा नियमेन च ॥ ४
ततः स्वयंभूर्भगवान्स्वयमागम्य भूपते ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ ५
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैस्तथा ।
रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः ॥ ६
दिशाभिर्विदिशाभिश्च नदीभिः सागरैः सह ।
नक्षत्रैश्च मुहूर्तैश्च खेचरैश्चापरैर्ग्रहैः ॥ ७
देवर्षिभिस्तपोयुक्तैः सिद्धैः सप्तर्षिभिस्तदा ।
राजर्षिभिः पुण्यतमैर्गन्धर्वैरप्सरोगणैः ॥ ८
चराचरगुरुः श्रीमान्वृतः सर्वसुरैस्तथा ।
ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यमागम्य चाब्रवीत् ॥ ९
प्रीतोऽस्मि तव भक्तस्य तपसाऽनेन सुव्रत ।
वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ॥ १०
हिरण्यकशिपुरुवाच ।
न देवा न च गन्धर्वा न यक्षोरगराक्षसाः ।
न मानुषाः पिशाचाश्च हन्युर्मां देवसत्तम ॥ ११
ऋषयो वा न मां शापैः क्रुद्धा लोकपितामह ।
शपेयुस्तपसा युक्ता वर एष वृतो मया ॥ १२
न शस्त्रेण नचास्त्रेण गिरिणा पादपेन च ।
न शुष्केण न चार्द्रेण स्यान्न वाऽन्येन मे वधः ॥ १३
नाकाशे नाथ भूमौ वा रात्रौ वा दिवसेपि वा ।
नान्तर्वा न बहिर्वापि स्याद्वधो मे पितामह ॥ १४
पशुभिर्वा मृगैर्न स्यात्पक्षिभिर्वा सरीसृपैः ।
ददासि चेद्वरानेतान्देवदेव वृणोम्यहम् ॥ १५
ब्रह्मोवाच ।
एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः ।
सर्वकामवरांस्तात प्राप्स्यसि त्वमसंशयम् ॥ १६
एवमुक्त्वा स भगवाञ्जगामाकाशमेव हि ।
रराज ब्रह्मलोके हि ब्रह्मर्षिगणसेवितः ॥ १७
ततो देवाश्च नागाश्च गन्धर्वा मुनयस्तथा ।
वरप्रदानं श्रुत्वैव ते ब्रह्माणमुपस्थिताः ॥ १८
देवा ऊचुः ।
वरेणानेन भगवन्बाधिष्यति स नोऽसुरः ।
तत्प्रसीदस्व भगवन्वधोपायोऽस्य चिन्त्यताम् ॥ १९
भीष्म उवाच ।
ततो लोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः ।
प्रोवाच भगवान्वाक्यं सर्वदेवगणांस्तदा ॥ २०
अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम् ।
तपसोऽन्तेऽस्य भगवान्वधं कृष्णः करिष्यति ॥ २१
एतच्छ्रुत्वा सुराः सर्वे ब्रह्मणा तस्य वै वधम् ।
स्वानि स्थानानि दिव्यानि जग्मुस्ते वै मुदान्विताः
लब्धमात्रे वरे चापि सर्वास्ता बाधते प्रजाः ।
हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः ॥ २३
राज्यं चकार दैत्येन्द्रो दैत्यसङ्घैः समावृतः ।
सप्तद्वीपान्वशेचक्रे लोकालोकान्तरं बलात् ॥ २४
दिव्यभोगान्समस्तान्वै लोके सर्वानवाप सः ।
देवांस्त्रिभुवनस्थांस्तु पराजित्य महासुरः ॥ २५
त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः ।
यदा वरमदोन्मत्तो न्यवसद्दानवो दिवि ॥ २६
अथ लोकान्समस्तांश्च विजित्य स महाबलः ।
भवेयमहमेवेन्द्रः सोमोऽग्निर्मारुतो रविः ॥ २७
सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश ।
अहं क्रोधश्च कामश्च वरुणो वसवोऽर्यमा ॥ २८
धनदश्च धनाध्यक्षो यक्षकिंपुरुषाधिपः ।
एते भवेयमित्युक्त्वा स्वयं भूत्वा बलात्स च ॥ २९
एषां गृहीत्वा स्थानानि तेषां कार्याण्यवाप सः ।
इज्यश्चासीन्मखवरैर्देवकिन्नरसत्तमैः ॥ ३०
नरकस्थान्समानीय स्वर्गस्थांश्च चकार सः ।
एवमादीनि कर्माणि कृत्वा दैत्यपतिर्बली ॥ ३१
आश्रमेषु महाभागान्मुनीन्वै शंसितव्रतान् ।
सत्यधर्मपरान्दान्तान्पुरा धर्षितवांस्तु सः ॥ ३२
याज्ञीयान्कृतवान्दैत्यान्याजकांश्चैव देवताः ।
यत्रयत्र सुरा जग्मुस्तत्रतत्र व्रजत्युत ॥ ३३
स्थानानि देवतानां तु हृत्वा राज्यमकारयत् ।
पञ्चकोट्यश्च वर्षाणि अयुतान्येकषष्टि च ॥ ३४
षष्टिश्चैव सहस्राणां जग्मुस्तस्य दुरात्मनः ।
एतद्वर्षं स दैत्येन्द्रो भोगैश्वर्यमवाप सः ॥ ३५

तेनातिबाध्यमानास्ते दैत्येन्द्रेण बलीयसा ।
ब्रह्मलोकं सुरा जग्मुः शर्वशक्रपुरोगमाः ॥ ३६
पितामहं समासाद्य खिन्नाः प्राञ्जलयोऽब्रुवन् ३७
देवा ऊचुः ।
भगवन्भूतभव्येश नस्त्रायस्व इहागतान् ।
भयं दितिसुताद्घोराद्भवत्यद्य दिवानिशम् ॥ ३८
भगवन्सर्वदैत्यानां स्वयंभूरादिकृत्प्रभुः ।
स्रष्टा त्वं हव्यकव्यानामव्यक्तः प्रकृतिर्ध्रुवः ॥ ३९
ब्रह्मोवाच ।
श्रूयतामापदेवं हि दुर्विज्ञेया मयापि च ।
नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ॥ ४०
अव्यक्तः सर्वभूतानामचिन्त्यो विभुरव्ययः ।
ममापि स तु युष्माकं व्यसने परमा गतिः ॥ ४१
नारायणः परोऽव्यक्तादहमव्यक्तसंभवः ।
मत्तो जज्ञुः प्रजा लोकाः सर्वे देवासुराश्च ते ॥ ४२
देवा यथाहं युष्माकं तथा नारायणो मम ।
पितामहोऽहं सर्वस्य स विष्णुः प्रपितामहः ॥ ४३
निश्चितं विबुधा दैत्यं स विष्णुस्तं हनिष्यति ।
तस्य नास्ति न शक्यं च तस्माद्व्रजत माचिरम् ॥ ४४
भीष्म उवाच ।
पितामहवचः श्रुत्वा सर्वे ते भरतर्षभ ।
विबुधा ब्रह्मणा सार्धं जग्मुः क्षीरोदधिं प्रति ॥ ४५
आदित्या वसवः साध्या विश्वे च मरुतस्तथा ।
रुद्रा महर्षयश्चैव अश्विनौ च सुरूपिणौ ॥ ४६
अन्ये च दिव्या ये राजंस्ते सर्वे सगणाः सुराः ।
चतुर्मुखं पुरस्कृत्य श्वेतद्वीपमुपागताः ॥ ४७
देवा ऊचुः ।
त्रायस्व नोऽद्य देवेश हिरण्यकशिपोर्वधात् ।
त्वं हि नः परमो धाता ब्रह्मादीनां सुरोत्तम ४८
उत्फुल्लाम्बुजपत्राक्ष शत्रुपक्षभयंकर ।
क्षयाय दितिवंशस्य शरणं त्वं भविष्यसि ॥ ४९
भीष्म उवाच ।
तद्देवानां वचः श्रुत्वा तदा विष्णुः शुचिश्रवाः ।
अदृश्यः सर्वभूतात्मा वक्तुमेवोपचक्रमे ॥ ५०
विष्णुरुवाच ।
भयं त्यजध्वममरा अभयं वो ददाम्यहम् ।
तदेव त्रिदिवं देवाः प्रतिपद्यत माचिरम् ॥ ५१
एषोऽहं सगणं दैत्यं वरदानेन दर्पितम् ।
अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥ ५२
ब्रह्मोवाच ।
भगवन्देवदेवेश खिन्ना एते भृशं सुराः ।
तस्मात्त्वं जहि दैत्येन्द्रं क्षिप्रं कालोऽस्य माचिरम् ।
एष त्वं सगणं दैत्यं वरदानेन दर्पितम् ॥ ५३
विष्णुरुवाच ।
क्षिप्रमेव करिष्यामि त्वरया दैत्यनाशनम् ।
तस्मात्त्वं विबुधाश्चैव प्रतिपद्यत वै दिवम् ॥ ५४
भीष्म उवाच ।
एवमुक्त्वा तु भगवान्विसृज्य त्रिदिवेश्वरान् ।
नरस्यार्धतनुर्भूत्वा सिंहस्यार्धतनुः पुनः ॥ ५५
नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ।
भीमरूपो महातेजा व्यादितास्य इवान्तकः ॥ ५६
हिरण्यकशिपुं राजञ्जगाम हरिरीश्वरः ।
दैत्यास्तमागतं दृष्ट्वा नारसिंहं महाबलम् ॥ ५७
ववर्षुः शस्त्रवर्षैस्ते सुसंक्रुद्धास्तदा हरिम् ।
तैः सृष्टसर्वशस्त्राणि भक्षयामास वै हरिः ॥ ५८
जघान च रणे दैत्यान्सहस्राणि बहूनि च ।
तान्निहत्य च दैतेयान्सर्वान्क्रुद्धान्महाबलान् ॥ ५९
अभ्यधावत्सुसंक्रुद्धो दैत्येन्द्रं बलगर्वितम् ।
जीमूतघनसङ्काशो जीमूतघननिस्वनः ॥ ६०
जीमूत इव दीप्तौजा जीमूत इव वेगवान् ।
दैत्यं सोऽतिबलं दृप्तं दृप्तशार्दूलविक्रमम् ॥ ६१
दृप्तैर्दैत्यगणैर्गुप्तं खरैर्नखमुखैरुत ।
ततः कृत्वा तु युद्धं वै तेन दैत्येन वै हरिः ॥ ६२
सन्ध्याकाले महातेजा भवनान्ते त्वरान्वितः ।
ऊरौ निधाय दैत्येन्द्रं निर्बिभेद नखैस्तदा ॥ ६३
महाबलं महावीर्यं वरदानेन गर्वितम् ।
दैत्यश्रेष्ठं सुरश्रेष्ठो जघान तरसा हरिः ॥ ६४
हिरण्यकशिपुं हत्वा सर्वदैत्यांश्च वै तदा ।

विबुधानां प्रजानां च हितं कृत्वा महाद्युतिः॥६५
प्रमुमोद हरिर्देवः प्राप्य धर्मं तदा भुवि ।
एष ते नारसिंहोऽत्र कथितः पाण्डुनन्दन ।
शृणु त्वं वामनं नाम प्रादुर्भावं महात्मनः ॥६६

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

बलिनिपीडितैरिन्द्रादिभिः प्रार्थितेन हरिणा अदित्यां वामनत्वेनावतीर्य बलिंप्रति याचनम् ॥ १ ॥ त्रिविक्रमरूपिणो हरेः पादाङ्गुष्ठनखनिर्भिण्णोर्ध्वाण्डाद्गङ्गायाः प्रादुर्भावो बलिनिग्रहश्च ॥ २ ॥

भीष्म उवाच ।
पुरा त्रेतायुगे राजन्बलिर्वैरोचनोऽभवत् ।
दैत्यानां पार्थिवो वीरो बलेनाप्रतिमो बली ॥ १
तदा बलिर्महाराज दैत्यसङ्घैः समावृतः ।
विजेतुं तरसा शक्रमिन्द्रस्थानमवाप सः ॥ २
तेन वित्रासिता देवा बलिनाऽऽखण्डलादयः ।
ब्रह्माणं तु पुरस्कृत्य गत्वा क्षीरोदधिं तदा ॥ ३
तुष्टुवुः सहिताः सर्वे देवं नारायणं प्रभुम् ।
स तेषां दर्शनं चक्रे विबुधानां हरिस्तदा ॥ ४
प्रसादजं तस्य विभोरदित्यां जन्म उच्यते ।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः ॥ ५
एष विष्णुरिति ख्यात इन्द्रस्यावरजोऽभवत् ।
तस्मिन्नेव च काले तु दैत्येन्द्रो बलवीर्यवान् ॥६
अश्वमेधं क्रतुश्रेष्ठमाहर्तुमुपचक्रमे ।
वर्तमाने तदा यज्ञे दैत्येन्द्रस्य युधिष्ठिर ॥ ७
स विष्णुर्मानवो भूत्वा प्रच्छन्नो ब्रह्मसंवृतः ।
मुण्डो यज्ञोपवीती च कृष्णाजिनधरः शिखी ॥८
पालाशदण्डं सङ्गृह्य वामनोऽद्भुतदर्शनः ।
प्रविश्य स बलेर्यज्ञे वर्तमाने च दक्षिणाम् ॥ ९
देहीत्युवाच दैत्येन्द्रं विक्रमांस्त्रीनिहैव ह ।
दीयतां त्रिपदीमात्रमित्ययाचन्महासुरम् ॥ १०
स तथेति प्रतिश्रुत्य प्रददौ विष्णवे तदा ।
तेन लब्ध्वा हरिर्भूमिं जृम्भयामास वै भृशम् ११
स शिशुः सदिवं खं च पृथिवीं च विशांपते ।
त्रिभिर्विक्रमणैश्चैव सर्वमाक्रमताभिभूः ॥ १२
बलेर्बलवतो यज्ञे बलिना विष्णुना पुरा ।
विक्रमैस्त्रिभिरक्षोभ्याः क्षोभितास्ते महासुराः१३
विप्रचित्तिमुखाः क्रुद्धाः सर्वसङ्घा महासुराः ।
नानावक्त्रा महाकाया नानावेषधरा नृप ॥ १४
नानाप्रहरणा रौद्रा नानामाल्यानुलेपनाः ।
स्वान्यायुधानि सङ्गृह्य प्रदीप्ता इव तेजसा ॥ १५
क्रममाणं हरिं तत्र उपावर्तन्त भारत ।
प्रमथ्य सर्वान्दैतेयान्पादहस्ततलैस्तु तान् ॥ १६
रूपं कृत्वा महाभीमं जहाराशु स मेदिनीम् ।
संप्राप्य दिवमाकाशमादित्यसदने स्थितः ॥ १७
अत्यरोचत भूतात्मा आदित्यस्यैव तेजसा ।
प्रकाशयन्दिशः सर्वाः प्रदिशश्च महायशाः ॥१८
शुशुभे स महाबाहुः सर्वलोकान्प्रकाशयन् ।
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे १९
नभस्तु क्रममाणस्य नाभ्यां किल तदा स्थितौ ।
परमाक्रममाणस्य जानुभ्यां तौ व्यवस्थितौ ॥२०
विष्णोरमितवीर्यस्य वदन्त्येवं द्विजातयः ।
अथास्य पादाक्रमणात्पफालाण्डो युधिष्ठिर ॥२१
तच्छिद्रात्स्यन्दिनी तस्य पादभ्रष्टा तु निम्नगा ।
ससार सागरं सा तु पावनी सागरंगमा ॥ २२
जहार मेदिनीं सर्वां हत्वा दानवपुङ्गवान् ।
आसुरीं श्रियमाहृत्य त्रीँल्लोकान्स जनार्दनः॥२३
सपुत्रदारानसुरान्पाताले संन्यवेशयत् ।
नमुचिः शम्बरश्चैव प्रह्लादश्च महामनाः ॥ २४
महाभूतानि भूतात्मा सविशेषाणि वै हरिः ।
कालं च सकलं राजन्गात्रभूतान्यदर्शयत् ॥ २५
तस्य गात्रे जगत्सर्वमानीतमधिपश्यति ।

न किंचिदस्ति लोकेषु यदनाप्तं महात्मना ॥२६
तद्धि रूपमुपेन्द्रस्य देवदानवमानवाः ।
दृष्ट्वा संमुमुहुः सर्वे विष्णुतेजोऽभिपीडिताः २७
बलिर्बद्धोऽभिमानी च यज्ञवाटे महात्मना ।
विरोचनकुलं सर्वं पाताले विनिवेशितम् ॥ २८
एवंविधानि कर्माणि कृत्वा गरुडवाहनः ।
न विसयमुपागच्छत्पारमेष्ठ्येन तेजसा ॥ २९
स सर्वममुरैश्वर्यं संप्रदाय शचीपतेः ।
त्रैलोक्यं च ददौ शक्रे विष्णुर्दानवसूदनः ॥३०
एष ते वामनो नाम प्रादुर्भावो महात्मनः ।
वेदविद्भिर्द्विजैरेतच्छ्रूयते वैष्णवं यशः ।
मानुषेषु ततो विष्णोः प्रादुर्भावांस्तथा शृणु॥३१

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

दत्तात्रेयनाम्नाऽवतीर्णस्य हरेः कार्तवीर्यार्जुनस्य वरदानादिकम् ॥ १ ॥

भीष्म उवाच ।
विष्णोः पुनर्महाभागः प्रादुर्भावो महात्मनः ।
दत्तात्रेय इति ख्यात ऋषिरासीन्महायशाः ॥ १
तेन नष्टेषु वेदेषु क्रियासु च मखेषु च ।
चातुर्वर्ण्ये च संकीर्णे धर्मे शिथिलतां गते ॥ २
अभिवर्धति चाधर्मे सत्ये नष्टे स्थितेऽनृते ।
प्रजासु क्षीयमाणासु धर्मे चामूलतां गते ॥ ३
सयज्ञाः सक्रिया वेदाः प्रत्यानीता हि तेन वै ।
चातुर्वर्ण्यमसंकीर्णं कृतं तेन महात्मना ॥ ४
स एष वै यदा प्रादाद्धैहयाधिपतेर्वरम् ।
तं हैहयानामधिपस्त्वर्जुनोऽभिप्रसादयन् ॥ ५
वनं पर्यचरन्सम्यक्छुश्रूषुरनुसूयकः ।
निर्ममो निरहंकारो दीर्घकालमतोषयत् ॥ ६
आराध्य दत्तात्रेयं हि अगृह्णात्स वरानिमान् ।
आप्तादाप्ततरान्विप्राद्विद्वान्विद्वन्निषेवितात् ॥ ७
ऋतेऽमरत्वं विप्रेण दत्तात्रेयेण धीमता ।
वरैश्चतुर्भिः प्रवृत इमान्वव्रे वरान्नृपः ॥ ८
श्रीमान्मनस्वी बलवान्सत्यवागनसूयकः ।
सहस्रबाहुर्भूयासमेष मे प्रथमो वरः ॥ ९
जरायुजाण्डजं सर्वं सर्वं चैव चराचरम् ।
शास्तुमिच्छामि धर्मेण द्वितीयस्त्वेष मे वरः॥१०
पितॄन्देवानृषीन्विप्रान्यजेयं विपुलैर्मखैः ।
अमित्रांश्च शितैर्बाणैस्तृतीयो वर एष मे ॥ ११
यस्य नासीन्न भविता न चास्ति सदृशः पुमान्।
इह वा दिवि वा लोके स मे हन्ता भवेदिति१२
सोऽर्जुनः कृतवीर्यस्य वरः पुत्रोऽभवद्युधि ।
स सहस्रं सहस्राणां माहिष्मत्यामवर्धत ॥ १३
स भूमिमखिलां जित्वा द्वीपांश्चापि समुद्रिणः ।
नभसीवाज्वलत्सूर्यः पुण्यैः कर्मभिरर्जुनः ॥ १४
इन्द्रद्वीपं कशेरुं च कामद्वीपं गभस्तिमत् ।
गन्धर्ववरुणद्वीपं सौहृष्टममितप्रभः ॥ १५
पूर्वैरजितपूर्वांश्च द्वीपानजयदर्जुनः ।
इदं तु कार्तवीर्यस्य बभूवासदृशं जनैः ॥ १६
न पूर्वे नापरे तस्य गमिष्यन्ति गतिं नृपाः ।
यदर्णवे प्रयातस्य वस्त्रं न परिषिच्यते ॥ १७
सौवर्णं सर्वमप्यासीद्विमानवरमुत्तमम् ।
चतुर्धा व्यभजद्राष्ट्रं तद्विभज्यान्वपालयत् ॥ १८
एकांशेनाहरत्सेनामेकांशेनावसद्गृहान् ।
यस्तु तस्य तृतीयांशो राज्ञोऽभूज्जनसंग्रहे ॥ १९
आप्तः परमकल्याणस्तेन यज्ञानकल्पयत् ।
ये दस्यवो ग्रामचरा अरण्ये च वसन्ति ये ॥२०
चतुर्थेन तु सोंऽशेन तान्सर्वान्प्रत्यषेधयत् ।
द्वाराणि नापिधीयन्ते पुरेषु नगरेषु च ॥ २१
स एव राष्ट्रपालोऽभूत्स्त्रीपालोऽभवदर्जुनः ।
स एवासीदजापालः स गोपालो विशांपते॥२२
शतं वर्षसहस्राणामनुशिष्यार्जुनो महीम् ।

दत्तात्रेयप्रसादेन एवं राज्यं चकार सः ॥ २३
एवं बहूनि कर्माणि चक्रे लोकहिताय सः ।
दत्तात्रेय इति ख्यातः प्रादुर्भावो ह्ययं हरेः ।
कथितो भरतश्रेष्ठ शृणु भूयो महात्मनः ॥ २४

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

श्रीहरेर्जमदग्निगृहे रामनाम्नाऽवतरणम् ॥ १ ॥ परशुरामेण कार्तवीर्यार्जुनहननम् ॥ २ ॥ त्रिस्सप्तकृत्वः क्षत्रियान्निहत्य तद्रक्तजलैः स्वपितॄणां तर्पणम् ॥ ३ ॥ काश्यपायाखण्डभूमण्डलं दत्त्वा साल्वेनायोधने कुमारीणां वाण्या तं विसृज्य शस्त्रन्यासपूर्वकं तपश्चरणम् ॥ ४ ॥

---

भीष्म उवाच ।
तथा भृगुकुले जन्म यदर्थं च महात्मनः ।
जामदग्न्य इति ख्यातः प्रादुर्भावश्च वैष्णवः ॥ १
जमदग्निसुतो राजन्रामो नाम स वीर्यवान् ।
हैहयान्तकरो राजन्स रामो बलिनां वरः ॥ २
कार्तवीर्यो महावीर्यो बलेनाप्रतिमस्तदा ।
रामेण जामदग्न्येन हतो विषममाचरन् ॥ ३
तं कार्तवीर्यं राजानं हैहयानामरिन्दमम् ।
रथस्थं पार्थिवं रामः पातयित्वाऽवधीद्रणे ॥ ४
जम्भस्य यज्ञं हत्वा स ऋत्विजश्चैव संस्तरे ।
जम्भस्य मूर्ध्नि भेत्ता च हन्ता च शतदुन्दुभेः॥५
स एष कृष्णो गोविन्दो जातो भृगुषु वीर्यवान्।
सहस्रबाहुमुद्धर्तुं सहस्रजितमाहवे ॥ ६
क्षत्रियाणां चतुष्षष्टिमयुतानि महायशाः ।
सरस्वत्यां समेतानि एष वै धनुषाऽजयत् ॥ ७
ब्रह्मद्विषां वधे तस्मिन्सहस्राणि चतुर्दश ।
पुनर्जघान शूराणामतिक्रूरो रथर्षभः ॥ ८
ततो राज्ञां सहस्रं स भङ्क्त्वा पूर्वमरिन्दमः ।
सहस्रं मुसलेनाहन्सहस्रमुदकृन्तत ॥ ९
चतुर्दशसहस्राणि कणधूममपाययत् ।
शिष्टान्ब्रह्मद्विषो जित्वा ततोऽस्नायत भार्गवः १०
रामरामेत्यभिक्रुष्टो ब्राह्मणैः क्षत्रियार्दितैः ।
निघ्नञ्शतसहस्राणि रामः परशुनाभिभूः ॥ ११
न ह्यमृष्यत तां वाचमार्तैर्भृशमुदीरिताम् ।
भृगो रामाभिधावेति यदाऽक्रन्दन्द्विजातयः॥१२
काश्मीरान्दरदान्कुन्तीन्क्षुद्रकान्मालवान्छकान् ।
चेदिकाशिकरूशांश्च ऋषिकान्क्रथकैशिकान्॥१३
अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
रात्रायणान्वीतिहोत्रान्किरातान्कार्तिकावतान् ॥
एतानन्यांश्च राजन्यान्देशेदेशे सहस्रशः ।
निकृत्य निशितैर्बाणैः संप्रदाय विवस्वते ॥ १५
कीर्णा क्षत्रियकोटीभिर्मेरुमन्दरभूषणा ।
त्रिःसप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता॥१६
कृत्वा निःक्षत्रियां चैव भार्गवः स महायशाः ।
इन्द्रगोपकवर्णस्य जीवञ्जीवनिभस्य च ॥ १७
पूरयित्वा च सरितः क्षतजस्य सरांसि च ।
चकार तर्पणं वीरः पितॄणां तासु तेषु च ॥ १८
सर्वानष्टादश द्वीपान्वशमानीय भार्गवः ।
सोऽश्वमेधसहस्राणि नरमेधशतानि च ॥ १९
इष्ट्वा सागरपर्यन्तां काश्यपाय महीं ददौ ।
तस्याग्रेणानुपर्येति भूमिं कृत्वा विपांसुलाम्॥२०
ततः कालकृतां सत्यां भार्गवाय महात्मने ।
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः॥२१
वेदिमष्टादशोत्सेधां हिरण्यस्यातिपौरुषीम् ।
रामेण जामदग्न्येन प्रतिजग्राह काश्यपः ॥ २२
एवमिष्ट्वा महाबाहुः क्रतुभिर्भूरिदक्षिणैः ।
अन्यद्वर्षशतं रामः सौभे साल्वमयोधयत् ॥ २३
ततः स भृगुशार्दूलस्तं सौभं योधयन्प्रभुः ।
सुबन्धुरं रथं राजन्नास्थाय भरतर्षभ ॥ २४
नग्निकानां कुमारीणां गायन्तीनामुपाशृणोत् ।

रामराम महाबाहो भृगूणां कीर्तिवर्धन ॥ २५
त्यज शस्त्राणि सर्वाणि न त्वं सौभं वधिष्यसि ।
शङ्खचक्रगदापाणिर्देवानामभयङ्करः ॥ २६
युधि प्रद्युम्नसाम्बाभ्यां कृष्णः सौभं वधिष्यति ।
तच्छ्रुत्वा पुरुषव्याघ्रस्तत एव वनं ययौ ॥ २७
न्यस्य सर्वाणि शस्त्राणि कालकाङ्क्षी महायशाः ।
रथं सर्वायुधं चैव शरान्परशुमेव च ॥ २८
धनूंष्यप्सु प्रतिष्ठाप्य रामस्तेपे परं तपः ।
ह्रियं प्रज्ञां श्रियं कीर्तिं लक्ष्मीं चामित्रकर्शनः २९
पश्चाधिष्ठाय धर्मात्मा तं रथं विससर्ज ह ।
आदिकाले प्रवृत्तं तु व्यभजत्करमीश्वरः ॥ ३०
नाग्रत्तं श्रद्धया सौभं न ह्यशक्तो महायशाः ।
जामदग्न्य इति ख्यातो यस्त्वयं भगवानृषिः ।
सोऽस्य भागस्तपस्तेपे भार्गवो लोकविश्रुतः॥ ३१

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## पञ्चाशोऽध्यायः ॥ ५० ॥

श्रीविष्णोर्दशरथगृहे रामत्वेनावतारः ॥ १ ॥ विश्वामित्रेण स्वाश्रमं नीतेन सलक्ष्मणेन रामेण सुबाह्वादिहननम् ॥ २ ॥ सीतामुद्वह्य निजनगरमेत्य पितृनिदेशेन सीतालक्ष्मणाभ्यां सह वनं गतेन रामेण खरदूषणादिहननम्॥ ३ ॥ सीतावियोगिनः सुग्रीवेण सख्यमेत्य वालिनं संहृतवतो रामस्य हनुमद्वचनेन लङ्कागमनम् ॥ ४ ॥ रावणादीन्निहत्य सीताप्रमुखैः सहायोध्यां गतेन रामेण लवणासुरं शत्रुघ्नेन घातयित्वा प्रजापालनम् ॥ ५ ॥ सङ्क्षेपेण श्रीकृष्णचरित्रनिरूपणं कल्क्यवतारकथनं च ॥ ६ ॥

भीष्म उवाच ।
शृणु राजंस्ततो विष्णोः प्रादुर्भावं महात्मनः ।
अष्टाविंशे युगे चापि मार्कण्डेयपुरःसरः ॥ १
तिथौ नावमिके जज्ञे तथा दशरथादपि ।
कृत्वाऽऽत्मानं महाबाहुश्चतुर्धा विष्णुरव्ययः ॥२
लोके राम इति ख्यातस्तेजसा भास्करोपमः ।
प्रसादनार्थं लोकस्य विष्णुस्तत्र सनातनः ॥ ३
धर्मार्थमेव कौन्तेय जज्ञे तत्र महायशाः ।
तमप्याहुर्मनुष्येन्द्रं सर्वभूतपतेस्तनुम् ॥ ४
यज्ञविघ्नकरस्तत्र विश्वामित्रस्य भारत ।
सुबाहुर्निहतस्तेन मारीचस्ताडितो भृशम् ॥ ५
तस्मै दत्तानि चास्त्राणि विश्वामित्रेण धीमता ।
वधार्थं सर्वशत्रूणां दुर्वाराणि सुरैरपि ॥ ६
वर्तमाने महायज्ञे जनकस्य महात्मनः ।
भग्नं माहेश्वरं चापं क्रीडता लीलया भृशम् ॥ ७
ततस्तु सीतां जग्राह भार्यार्थे जानकीं विभुः ।
नगरीं पुनरासाद्य मुमुदे तत्र सीतया ॥ ८
कस्यचित्त्वथ कालस्य पित्रा तत्राभिचोदितः ।
कैकेय्याः प्रियमन्विच्छन्वनमभ्यवपद्यत ॥ ९
यः समाः सर्वधर्मज्ञश्चतुर्दश वने वसन् ।
लक्ष्मणानुचरो रामः सर्वभूतहिते रतः ॥ १०
चतुर्दश वने तीर्त्वा तदा वर्षाणि भारत ।
रूपिणी यस्य पार्श्वस्था सीतेत्यभिहिता जनैः११
पूर्वोचितत्वात्सा लक्ष्मीर्भर्तारमनुशोचति ।
जनस्थाने वसन्कार्यं त्रिदशानां चकार सः॥ १२
मारीचं दूषणं हत्वा खरं त्रिशिरसं तथा ।
चतुर्दश सहस्राणि रक्षसां घोरकर्मणाम् ॥ १३
जघान रामो धर्मात्मा प्रजानां हितकाम्यया ।
विराधं च कबन्धं च राक्षसौ घोरकर्मिणौ ॥१४
जघान च तदा रामो गन्धर्वौ शापविक्षतौ ।
स रावणस्य भगिनीनासाच्छेदमकारयत् ॥ १५
भार्यावियोगं तं प्राप्य मृगयन्व्यचरद्वनम् ।
स तस्मादृश्यमूकं तु गत्वा पम्पामतीत्य च ॥१६
सुग्रीवं मारुतिं दृष्ट्वा चक्रे मैत्रीं तयोः स वै ।
अथ गत्वा स किष्किन्धां सुग्रीवेण तदा सह१७
निहत्य वालिनं युद्धे वानरेन्द्रं महाबलम् ।
अभ्यषिञ्चत्तदा रामः सुग्रीवं वानरेश्वरम् ॥ १८
ततः स वीर्यवान्राजंस्त्वरया वै समुत्सुकः ।
विचित्य वायुपुत्रेण लङ्कादेशं निवेदितः ॥ १९
सेतुं बद्ध्वा समुद्रस्य वानरैः स समुत्सुकः ।

सीतायाः पदमन्विच्छन्रामो लङ्कां विवेश वै ॥२०
देवोरगगणानां हि यक्षराक्षसपक्षिणाम् ।
तत्रावध्यं राक्षसेन्द्रं रावणं युधि दुर्जयम् ॥ २१
युक्तं राक्षसकोटीभिर्भिन्नाञ्जनचयोपमम् ।
दुर्निरीक्ष्यं सुरगणैर्वरदानेन दर्पितम् ॥ २२
जघान सचिवैः सार्धं सान्वयं रावणं रणे ॥ २३
त्रैलोक्यकण्टकं वीरं महाकायं महाबलम् ।
रावणं सगणं हत्वा रामो भूतपतिः पुरा ॥ २४
लङ्कायां तं महात्मानं राक्षसेन्द्रं विभीषणम् ।
अभिषिच्य ततो राम अमरत्वं ददौ तदा ॥२५
आरुह्य पुष्पकं रामः सीतामादाय पाण्डव ।
सबलं स्वपुरं गत्वा धर्मराज्यमपालयत् ॥ २६
दानवो लवणो नाम मधोः पुत्रो महाबलः ।
शत्रुघ्नेन हतो राजंस्तदा रामस्य शासनात् ॥ २७
एवं बहूनि कर्माणि कृत्वा लोकहिताय सः ।
राज्यं चकार विधिवद्रामो धर्मभृतां वरः ॥ २८
शताश्वमेधानाजह्रे ज्योतिरुक्थ्यान्निरर्गलान् ।
नाश्रूयन्ताशुभा वाचो नात्ययः प्राणिनां तदा २९
न दस्युजं भयं चासीद्रामे राज्यं प्रशासति ।
ऋषीणां देवतानां च मनुष्याणां तथैव च ॥३०
पृथिव्यां धार्मिकाः सर्वे रामे राज्यं प्रशासति ।
नाधर्मिष्ठो नरः कश्चिद्बभूव प्राणिनां क्वचित् ॥३१
प्राणापानौ समौ ह्यास्तां रामे राज्यं प्रशासति ।
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ॥३२
श्यामो युवा लोहिताक्षो मातङ्गानामिवर्षभः ।
आजानुबाहुः सुमुखः सिंहस्कन्धो महाबलः ॥३३
दशवर्षसहस्राणि दशवर्षशतानि च ।
राज्यं भोगं च संप्राप्य शशास पृथिवीमिमाम् ३४
रामो रामो राम इति प्रजानामभवन्कथाः ।
रामभूतं जगदिदं रामे राज्यं प्रशासति ॥ ३५
ऋग्यजुःसामहीनाश्च न तदाऽऽसन्द्विजातयः ।
उषित्वा दण्डके कार्यं त्रिदशानां चकार सः ३६
पूर्वापकारिणं तं तु पौलस्त्यं मनुजर्षभम् ।
देवगन्धर्वनागानामरिं स निजघानह ॥ ३७
सत्ववान्गुणसंपन्नो दीप्यमानः स्वतेजसा ।
एवमेव महाबाहुरिक्ष्वाकुकुलवर्धनः ॥ ३८
रावणं सगणं हत्वा दिवमाक्रमताभिभूः ।
इति दाशरथेः ख्यातः प्रादुर्भावो महात्मनः ॥३९
ततः कृष्णो महाबाहुर्भीतानामभयङ्करः ।
अष्टाविंशे युगे राजञ्जज्ञे श्रीवत्सलक्षणः ॥ ४०
पेशलश्च वदान्यश्च लोके बहुमतो नृषु ।
स्मृतिमान्देशकालज्ञः शङ्खचक्रगदासिभृत् ॥ ४१
वासुदेव इति ख्यातो लोकानां हितकृत्सदा ।
वृष्णीनां च कुले जातो भूमेः प्रियचिकीर्षया ॥४२
शत्रूणां भयकृद्दाता मधुहेति स विश्रुतः ।
शकटार्जुनरामाणां कीलस्थानान्यसूदयत् ॥ ४३
कंसादीन्निजघानाजौ दैत्यान्मानुषविग्रहान् ।
अयं लोकहितार्थाय प्रादुर्भावो महात्मनः ॥४४
कल्की विष्णुयशा नाम भूयश्चोत्पत्स्यते हरिः ।
कलेर्युगान्ते संप्राप्ते धर्मे शिथिलतां गते ॥ ४५
पाषण्डिनां गणानां हि वधार्थं भरतर्षभ ।
धर्मस्य च विवृद्ध्यर्थं विप्राणां हितकाम्यया ॥४६
एते चान्ये च बहवो विष्णोर्देवगणैर्युताः ।
प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवादिभिः ॥४७

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

युधिष्ठिरेण भीष्मंप्रति विस्तरेण कृष्णकथाकथनप्रार्थना ॥ १ ॥ देवासुरयुद्धे पराजितानां देवानां स्मरणमात्रसंनिहितेन हरिणा दैत्यानां पराजयः ॥ २ ॥ भूम्यां स्वभारावतरणं प्रार्थितेऽस्य विष्णोः भूमाववतारनिर्धारणम् ॥ ३ ॥

वैशंपायन उवाच ।
एवमुक्ते तु कौन्तेयस्ततः कौरवनन्दनः ।
आबभाषे पुनर्भीष्मं धर्मराजो युधिष्ठिरः ॥ १
भूय एव मनुष्येन्द्र उपेन्द्रस्य यशस्विनः ।

जन्म वृष्णिषु विज्ञातुमिच्छामि वदतां वर ॥ २
यथैव भगवाञ्जातः क्षिताविह जनार्दनः ।
माधवेषु महाबुद्धिस्तन्मे ब्रूहि पितामह ॥ ३
वैशंपायन उवाच ।
एवमुक्तस्ततो भीष्मः केशवस्य महात्मनः ।
माधवेषु तथा जन्म कथयामास वीर्यवान् ॥ ४
हन्त ते कथयिष्यामि युधिष्ठिर यथातथम् ।
यतो नारायणस्येह जन्म वृष्णिषु कौरव ॥ ५
पुरा लोके महाराज वर्तमाने कृते युगे ।
आसीत्रैलोक्यविख्यातः सङ्ग्रामस्तारकामयः ॥६
विरोचनो मयस्तारो वराहः श्वेत एव च ।
विप्रचित्तिः प्रलम्बश्च वृत्रजम्भबलादयः ॥ ७
नमुचिः कालनेमिश्च प्रह्लाद इति विश्रुतः ।
लम्बः किशोरः स्वर्भानुररिष्टो राक्षसेश्वरः ॥ ८
एते चान्ये च बहवो दैत्यसङ्घाः सहस्रशः ।
नानाशस्त्रधरा राजन्नानाभूषणवाहनाः ॥ ९
देवतानामभिमुखास्तस्थुर्दैतेयदानवाः ।
देवास्तु युध्यमानास्ते दानवानभ्ययू रणे ॥ १०
आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ।
इन्द्रो यमश्च वरुणश्चन्द्रश्चैव धनेश्वरः ॥ ११
अश्विनौ च महावीर्यौ ये चान्ये देवतागणाः ।
चक्रुर्युद्धं महाघोरं दानवैश्च यथाक्रमम् ॥ १२
युध्यमानाः समेयुश्च देवा दैतेयदानवैः ।
तद्युद्धमभवद्घोरं देवदानवसङ्कुलम् ॥ १३
ताभ्यां बलाभ्यां संजज्ञे तुमुलो विग्रहस्तदा ।
तीक्ष्णशस्त्रैः किरन्तोऽथ अभ्ययुर्देवदानवाः ॥१४
घ्नन्ति देवान्सगन्धर्वान्सयक्षोरगचारणान् ।
ते वध्यमाना दैतेयैर्देवसङ्घास्तदा रणे ॥ १५
त्रातारं मनसा जग्मुर्देवं नारायणं प्रभुम् ।
एतस्मिन्नन्तरे तत्र जगाम हरिरीश्वरः ॥ १६
दीपयञ्ज्योतिषा भूमिं शङ्खचक्रगदाधरः ।
तमागतं सुपर्णस्थं विष्णुं लोकनमस्कृतम् ॥ १७
दृष्ट्वा मुदा युताः सर्वे भयं त्यक्त्वा रणे सुराः ।
चक्रुर्युद्धं पुनः सर्वे देवा दैतेयदानवैः ॥ १८
तद्युद्धमभवद्घोरमचिन्त्यं रोमहर्षणम् ।
जघ्नुर्दैत्यात्रणे घोराः सर्वे शक्रपुरोगमाः ॥ १९
ते बाध्यमाना विबुधैर्दुद्रुवुर्दैत्यदानवाः ॥ २०
विद्रुतान्दानवान्दृष्ट्वा तदा भारत संयुगे ।
कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत॥२१
शत्रुप्रहरणे घोरः शतबाहुः शताननः ।
शतशीर्षः स्थितः श्रीमाञ्छतशृङ्ग इवाचलः ॥२२
भास्कराकारमुकुटः शिञ्जिताभरणाङ्गदः ।
धूम्रकेतुर्हरिश्मश्रुर्निर्दष्टोष्ठपुटाननः ॥ २३
त्रैलोक्यान्तरविस्तारं धारयन्विपुलं वपुः ।
तर्जयन्वै रणे देवाञ्छादयन्वै दिशो दश ॥ २४
अभ्यधावत्सुसंक्रुद्धो व्यादितास्य इवान्तकः ।
तत्र शस्त्रप्रतानैश्च देवान्धर्षितवात्रणे ॥ २५
अभ्याययुः सुरान्सर्वान्पुनस्ते दैत्यदानवाः ।
आपीडयन्रणे क्रुद्धास्ततो देवान्युधिष्ठिर ॥ २६
ते वध्यमाना विबुधाः समरे कालनेमिना ।
दैत्यैश्चैव महाराज दुद्रुवुस्ते दिशो दश ॥ २७
विबुधान्विद्रुतान्दृष्ट्वा कालनेमिर्महाऽसुरः ।
इन्द्रं यमं च वरुणं वायुं च धनदं रविम् ॥ २८
एतांश्चान्यान्बलाज्जित्वा तेषां कार्याण्यवाप सः ।
तान्सर्वान्सहसा जित्वा कालनेमिर्महासुरः ॥२९
ददर्श गगने विष्णुं सुपर्णस्थं महाद्युतिम् ।
तं दृष्ट्वा क्रोधताम्राक्षस्तर्जयन्नभ्ययात्तदा ॥ ३०
स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे ।
रोषाद्भारत दैत्येन्द्रो विष्णोरुरसि पातयत् ॥३१
दैत्याश्च दानवाश्चैव सर्वे मयपुरोगमाः ।
स्वान्यायुधानि संगृह्य सर्वे विष्णुमुपाद्रवन् ॥३२
स ताड्यमानोऽतिबलैर्दैत्यैः सर्वायुधोद्यतैः ।
न चचाल हरिर्युद्धेऽकम्पमान इवाचलः ॥ ३३
पुनरुद्यम्य संक्रुद्धः कालनेमिर्दृढां गदाम् ।
जघान गदया राजंस्तं विष्णुं गरुडं च वै ॥ ३४
तं दृष्ट्वा गरुडं श्रान्तं चक्रमुद्यम्य वै हरिः ।
शतं शिरांसि बाहूंश्च सोच्छिनत्कालनेमिनः॥३५
जघानान्यांश्च तान्सर्वान्समरे दैत्यदानवान् ।

विबुधानामृषीणां च स्वानि स्थानानि वै ददौ३६
दत्त्वा सुराणां सुप्रीतो योग्यकर्माणि भारत ।
जगाम ब्रह्मणा सार्धं ब्रह्मलोकं तदा हरिः ॥३७
ब्रह्मलोकं प्रविश्याथ प्राप्य नारायणः प्रभुः ।
पौराणं ब्रह्मसदनं दिव्यं नारायणाश्रयम् ॥ ३८
स प्रविश्य तदा देवः स्तूयमानो महर्षिभिः ।
सहस्रशीर्षा भूत्वा च शयनायोपचक्रमे ॥ ३९
आदिदेवः पुराणात्मा निद्रावशमुपागतः ।
शेते सुखं सदा विष्णुर्मोहयञ्जगदव्ययः ॥ ४०
जग्मुस्तस्याथ वर्षाणि शयानस्य महात्मनः ।
षट्त्रिंशच्छतसाहस्रं मानुषेणेह सङ्ख्यया ॥ ४१
जग्मुः कृतयुगत्रेताद्वापरान्ते बुबोध ह ।
ब्रह्मादिभिः स्तूयमानः सुरैश्चापि सहर्षिभिः॥४२
उत्पत्य शयनाद्विष्णुर्ब्रह्मणा विबुधैः सह ।
देवानां च हितार्थाय ययौ देवसभां प्रति ॥४३

मेरोः शिरसि विन्यस्तां ज्वलन्तीं तां शुभां सभाम्।
विविशुस्ते सुराः सर्वे ब्रह्मणा सह भारत ॥ ४४
जग्मुस्तत्र निषेदुस्ते सा निःशब्दा ह्यभूत्तदा ।
तत्र भूमिरुवाचाथ खेदात्करुणभाषिणी ॥ ४५
राज्ञां बलैर्बलवतां खिन्नास्मि भृशपीडिता ।
नित्यं भारपरिश्रान्ता दुःखं जीवाम्यहं सुराः॥४६
पुरे पुरे च नृपतिः कोटिसङ्ख्यैर्बलैर्वृतः ।
राष्ट्रे राष्ट्रे च शतशो ग्रामाः कुलसहस्रिणः ॥४७
भूमिपानां सहस्रैश्च तेषां च बलिनां बलैः ।
ग्रामायुतैः पुरै राष्ट्रैरहं निर्विवरीकृता ॥ ४८
तस्माद्धारयितुं शक्त्या न क्षमामि जनानहम् ।
दैत्यैश्च बाध्यमानास्ताः प्रजा नित्यं दुरात्मभिः४९
भीष्म उवाच ।
भूमेस्तु वचनं श्रुत्वा देवो नारायणस्तदा ।
व्यादिश्य तान्सुरान्सर्वान्क्षितौ वस्तुं मनो दधे५०

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

विष्णुना देवानां भूमावुत्पत्तये आज्ञापनम् ॥ १ ॥ अवतीर्णे कृष्णे स्वर्गादागतानामिन्द्रादीनां श्रीकृष्णं स्तुत्वा पुनः स्वलोकगमनम् ॥ २ ॥ श्रीकृष्णेन शकटासुरवधः । अर्जुनतरुभञ्जनम् । वृन्दावनं गत्वा वने विहरणम् ॥ ३ ॥

भीष्म उवाच ।
यच्चक्रे भगवान्विष्णुर्वसुदेवसुतस्तदा ।
तत्तेऽहं संप्रवक्ष्यामि शृणु सर्वमशेषतः ॥ १
वासुदेवस्य माहात्म्यं चरितं च महात्मनः ।
हितार्थं सुरमर्त्यानां लोकानां च हिताय च ॥ २
यदा दिवि विभुस्तात न रेमे भगवानसौ ।
ततो व्यादिश्य भूतानि विभुर्भूमिसुखावहः ॥ ३
निग्रहार्थाय दैत्यानां चोदयामास वै तदा ।
मरुतश्च वसूंश्चैव सूर्याचन्द्रमसावुभौ ॥ ४
गन्धर्वाप्सरसश्चैव रुद्रादित्यांस्तथाऽश्विनौ ।
जायध्वं मानुषे लोके सर्वलोकमहेश्वराः ॥ ५
जङ्गमानि विशालाक्षो ह्यात्मार्थमसृजत्प्रभुः ।
जायन्तामिति गोविन्दस्तिर्यग्योनिगतैः सह ॥ ६
तानि सर्वाणि सर्वज्ञो व्यजायत यदोः कुले ।

आत्मानमात्मना तात कृत्वा बहुविधं हरिः ।
रत्यर्थमिह गास्तत्र ररक्ष पुरुषोत्तमः । ७
अजातशत्रो जातस्तु यथेष्टं भुवि भूमिप ।
कीर्त्यमानं मया तात निबोध भरतर्षभ ॥ ८
सागराः समकम्पन्त मुदा चेलुश्च पर्वताः ।
जज्वलुश्चाग्नयः शान्ता जायमाने जनार्दने ॥ ९
शिवाः संप्रववुर्वाताः प्रशान्तमभवद्रजः ।
ज्योतींषि संप्रकाशन्त जायमाने जनार्दने ॥ १०
देवदुन्दुभयश्चापि सस्वनुर्भृशमम्बरे ।
अभ्यवर्षंस्तदाऽऽगम्य देवताः पुष्पवृष्टिभिः॥११
गीर्भिर्मङ्गलयुक्ताभिः स्तुवन्त्यो वै मधुसूदनम् ।
उपतस्थुस्तदा प्रीताः प्रादुर्भावे महर्षयः ॥ १२
ततस्तानभिसंप्रेक्ष्य नारदप्रमुखानृषीन् ।
उपानृत्यन्नुपजगुर्गन्धर्वाप्सरसां गणाः ॥ १३

कृतयुगत्रेताद्वापराः अन्त इति छेदः ॥ ४२ ॥ एकपञ्चाशोऽध्यायः ॥ ५१ ॥

उपतस्थे च गोविन्दं सहस्राक्षः शचीपतिः ।
अभ्यभाषत तेजस्वी महर्षीन्पूजयंस्तदा ॥ १४
कृत्वा च देवकार्याणि कृत्वा देवहितानि च ।
स्वं लोकं लोककृद्देवः पुनर्गच्छति तेजसा ॥ १५
इत्युक्त्वा ऋषिभिः सार्धं जगाम त्रिदिवं पुनः ।
अभ्यनुज्ञाय तान्सर्वाञ्छादयन्प्रकृतिं पराम् ॥ १६
नन्दगोपकुले कृष्ण उवास बहुलाः समाः ।
ततः कदाचित्सुप्तं तं शकटस्य त्वधः शिशुम् १७
यशोदा संपरित्यज्य जगाम यमुनां नदीम् ।
शिशुलीलां ततः कुर्वन्स्वहस्तचरणौ क्षिपन् ॥ १८
रुरोद मधुरं कृष्णः पादावूर्ध्वं प्रसारयन् ।
पादाङ्गुष्ठेन शकटं दारयन्नथ केशवः ॥ १९
तत्र एकेन पादेन पातयित्वा तथा शिशुः ।
न्युब्जं पयोधराकाङ्क्षी ससार च रुरोद च ॥ २०
पाटितं शकटं दृष्ट्वा भिन्नभाण्डपुटीकटम् ।
जनास्ते शिशुना तेन विस्मयं परमं ययुः ॥ २१
प्रत्यक्षं शूरसेनानां दृश्यते महदद्भुतम् ।
शयानेन हतः कंसपक्षवांस्तिग्मतेजसा ॥ २२
पूतना चापि निहता महाकाया महास्तनी ।
ततः काले महाराज संसक्तौ रामकेशवौ ॥ २३
कृष्णः संकर्षणश्चोभौ रिङ्गिणौ च बभूवतुः ।
अन्योन्यकिरणाक्रान्तौ चन्द्रसूर्याविवाम्बरे ॥ २४
विसर्पन्तौ च सर्वत्र महासर्पभुजौ तदा ।
रेजतुः पांसुदिग्धाङ्गौ रामकृष्णौ तदा नृप ॥ २५
क्वचिच्च जानुभिः स्पृष्टौ क्रीडमानौ क्वचिद्वने ।
पिबन्तौ दधिकुल्यांश्च मथ्यमाने च भारत ॥ २६
ततः स बालो गोबिन्दो नवनीतं तदा क्षयम् ।
ग्रासमानस्तु तत्रायं गोपीभिर्ददृशे तथा ॥ २७
दाम्नाऽथोलूखले कृष्णो गोपीभिश्च निबन्धितः ।
तत्तथा शिशुना तेन कर्षता चार्जुनावुभौ ॥ २८
समूलविटपौ भग्नौ तदद्भुतमिवाभवत् ।
ततस्तौ बाल्यमुत्तीर्णौ कृष्णसंकर्षणावुभौ ॥ २९
तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ।
नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ ॥ ३०
बभूवतुर्वत्सपालौ काकपक्षधरावुभौ ।
पर्णवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ॥ ३१
शुशुभाते वनगतौ त्रिशीर्षाविव पन्नगौ ।
मयूराङ्गजकर्णौ तौ पल्लवापीडधारिणौ ॥ ३२
वनमालापरिक्षिप्तौ सालपोताविवोद्गतौ ।
अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ ॥ ३३
सशिक्यतुम्बुरुकरौ गोपवेणुप्रवादकौ ।
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ क्वचिद्वने ॥ ३४
पर्णशय्यासु तौ सुप्तौ क्वचिन्निद्रान्तरैषिणौ ।
तौ वत्सान्पालयन्तौ हि शोभयन्तौ महद्वनम् ३५
चञ्चूर्यन्तौ रमन्तौ च राजन्नेवं तदा शुभम् ।
ततो बृन्दावनं गत्वा वसुदेवसुतावुभौ ।
गोकुलं तत्र कौन्तेय चारयन्तौ विजह्रतुः ॥ ३६

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

कृष्णेन बालकैः सह विहृत्य कालियमर्दनम् ॥ १ ॥ बलरामेण धेनुकासुरहननम् ॥ २ ॥ कृष्णेन गोवर्धनोद्धरणम् ॥ ३ ॥ अरिष्टासुरादिहननम् ॥ ४ ॥ मधुरायां कंसं हत्वा पित्रोः पादाभिवन्दनम् ॥ ५ ॥

भीष्म उवाच ।
ततः कदाचिद्गोविन्दो ज्येष्ठं संकर्षणं विना ।
चचार तद्वनं रम्यं सुखरूपो वराननः ॥ १
काकपक्षधरः श्रीमाञ्छ्यामः पद्मनिभेक्षणः ।
श्रीवत्सेनोरसा युक्तः शशाङ्क इव लक्ष्मणा ॥ २
रज्जुयज्ञोपवीती स पीताम्बरधरो युवा ।
श्वेतचन्दनलिप्ताङ्गो नीलकुञ्चितमूर्धजः ॥ ३
राजता बर्हिपत्रेण मन्दमारुतकम्पिना ।
क्वचिद्गायन्क्वचित्क्रीडन्क्वचिन्नृत्यन्क्वचिद्धसन् ॥ ४
गोपवेणुं सुमधुरं कामं तदपि वादयन् ।

प्रह्लादनार्थं च गवां क्वचिद्वनगतो युवा ॥ ५
गोकुले मेघकाले तु चचार द्युतिमान्प्रभुः ।
बहुरम्येषु देशेषु वनस्य वनराजिषु ॥ ६
तासु कृष्णो मुदा युक्तः क्रीडयन्भरतर्षभ ।
स कदाचिद्वने तस्मिन्गोभिः सह परिव्रजन् ॥ ७
भाण्डीरं नाम दृष्ट्वाऽथ न्यग्रोधं केशवो महान् ।
तच्छायायां मतिं चक्रे निवासाय तदा प्रभुः॥ ८
स तत्र वयसा तुल्यैर्वत्सपालैस्तदाऽनघ ।
रेमे स दिवसं कृष्णः पुरा स्वर्गगतो यथा ॥ ९
तं क्रीडमानं गोपालाः कृष्णं भाण्डीरवासिनः ।
रमयन्ति स्म बहवो मान्यैः क्रीडनकैस्तदा ॥ १०
अन्ये स्म परिगायन्ति गोपा मुदितमानसाः ।
गोपालकृष्णमेवान्ये गायन्ति स्म वनप्रियाः ॥ ११
तेषां संगायतामेव वादयामास केशवः ।
पर्णवाद्यान्तरे वेणुं तुम्बवीणां च तत्र वै ॥ १२
एवं क्रीडान्तरैः कृष्णो गोपालैर्विजहार सः ।
तेन बालेन कौन्तेय कृतं लोकहितं तदा ॥ १३
पश्यतां सर्वभूतानां वासुदेवेन भारत ।
ह्रदे निपतता तत्र क्रीडितं नागमूर्धनि ॥ १४
शासयित्वा तु कालीयं सर्वलोकस्य पश्यतः ।
विजहार ततः कृष्णो बलदेवसहायवान् ॥ १५
धेनुको दारुणो राजन्दैत्यो रासभविग्रहः ।
तदा तालवने राजन्बलदेवेन वै हतः ॥ १६
ततः कदाचित्कौन्तेय रामकृष्णौ वनं गतौ ।
चारयन्तौ प्रवृद्धानि गोधनानि शुभाननौ ॥ १७
विहरन्तौ मुदा युक्तौ वीक्षमाणौ वनानि वै ।
क्ष्वेलयन्तौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ॥
नामभिर्व्याहरन्तौ च वत्सान्गाश्च परन्तपौ ।
चेरतुर्लोकसिद्धाभिः क्रीडाभिरपराजितौ ॥ १९
तौ देवौ मानुषीं दीक्षां वहन्तौ सुरपूजितौ ।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥ २०
एवं बाल्येऽपि गोपालैः क्रीडाभिश्च विजह्रतुः २१
ततः कृष्णो महातेजास्तदा गत्वा तु गोव्रजम् ।
गिरियज्ञं तमेवैष प्रवृत्तं गोपदारकैः ॥ २२
बुभुजे पायसं शौरिरीश्वरः सर्वभूतकृत् ।
तं दृष्ट्वा गोपकाः सर्वे कृष्णमेव समर्चयन् ॥ २३
पूज्यमानस्तदा देवैर्दिव्यं वपुरधारयत् ।
धृतो गोवर्धनो नाम सप्ताहं पर्वतो धृतः ॥ २४
शिशुना वासुदेवेन गवार्थमरिमर्दन ।
क्रीडमानस्तदा कृष्णः कृतवान्कर्म दुष्करम् ॥ २५
तदद्भुतमतीवासीत्सर्वलोकस्य भारत ।
देवदेवः क्षितिं गत्वा कृष्णं नत्वा मुदान्वितः २६
गोविन्द इति तं ह्युक्त्वा ह्यभ्यषिञ्चत्पुरन्दरः ।
इत्युक्त्वाश्लिष्य गोविन्दं पुरुहूतोभ्ययाद्दिवम् २७
अथारिष्ट इति ख्यातं दैत्यं वृषभविग्रहम् ।
जघान तरसा कृष्णः पशूनां हितकाम्यया ॥ २८
केशिनामा ततो दैत्यो राजंस्तुरगविग्रहः ।
तथा वनगतं पार्थ गजायुतबलं हयम् ॥ २९
कराम्भोरुहवज्रेण जघान मधुसूदनः ।
अथ मल्लं तु चाणूरं निजघान महाऽसुरम् ॥ ३०
सुदामानममित्रघ्न सर्वसैन्यपुरस्कृतम् ।
बालरूपेण गोविन्दो निजघान च भारत ॥ ३१
बलदेवेन चायत्नात्समाजे मुष्टिको हतः ।
ताडितश्च सहामात्यः कंसः कृष्णेन भारत ॥ ३२
हत्वा कंसममित्रघ्नः सर्वेषां पश्यतां तदा ।
अभिषिच्योग्रसेनं तं पित्रोः पादमवन्दत ।
एवमादीनि कर्माणि कृतवान्वै जनार्दनः ॥ ३३

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

## चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

रामकृष्णयोः विद्याभ्यासार्थं सान्दीपिन्याचार्यसमीपगमनम् ॥ १ ॥ सान्दीपिनिना गुरुदक्षिणात्वेन मृतपुत्रानयनं चोदितेन कृष्णेन खेनोज्जीवितस्य पुत्रस्य गुरवे समर्पणम् ॥ २ ॥ कंसपराक्रमादिवर्णनम् ॥ ३ ॥ कृष्णेन जरासन्धपराजयः ॥ ४ ॥

भीष्म उवाच ।
ततस्तौ जग्मतुस्तत्र गुरुं सान्दीपिनिं पुनः ।

गुरुशुश्रूषणायुक्तौ धर्मज्ञौ धर्मचारिणौ ॥ १
व्रतमुग्रं महात्मानौ विचरन्तावनवन्तिषु ।
अहोरात्रैश्चतुष्षष्ट्या साङ्गान्वेदानवापतुः ॥ २
लेख्यं च गणितं चोभौ प्राप्नुतां यदुनन्दनौ ।
गान्धर्ववेदं वैद्यं च सकलं समवापतुः ॥ ३
हस्तिशिक्षामश्वशिक्षां द्वादशाहेन चाप्नुताम् ।
तावुभौ जग्मतुर्वीरौ गुरुं सान्दीपिनिं पुनः ॥ ४
धनुर्वेदचिकीर्षार्थं धर्मज्ञौ धर्मचारिणौ ।
ताविष्वासवराचार्यमभिगम्य प्रणम्य च ॥ ५
तेन वै सत्कृतौ राजंश्चरन्तौ तावनवन्तिषु ।
पञ्चाशद्भिरहोरात्रैर्दशाङ्गं सुप्रतिष्ठितम् ॥ ६
सरहस्यं धनुर्वेदं सकलं तावनवापतुः ।
दृष्ट्वा कृतार्थो विप्रेन्द्रो गुर्वर्थे तावचोदयत् ॥ ७
अयाचतार्थं गोविन्दं तदा सान्दीपिनिर्विभुम् ।
मम पुत्रः समुद्रेऽस्मिंस्तिमिना चापवाहितः ॥ ८
पुत्रमानय भद्रं ते भक्षितं तिमिना मम ।
आर्ताय गुरवे तत्र प्रतिशुश्राव दुष्करम् ॥ ९
अशक्यं सर्वभूतेषु कर्तुमन्येन केनचित् ।
यश्च सान्दीपिनेः पुत्रं जहार भरतर्षभ ॥ १०
सोऽसुरः समरे ताभ्यां समुद्रे विनिपातितः ।
ततः सान्दीपिनेः पुत्रः प्रसादादमितौजसः ॥ ११
दीर्घकालं कृतः प्रेतः पुनरासीच्छरीरवान् ।
तदशक्यमचिन्त्यं च दृष्ट्वा सुमहदद्भुतम् ॥ १२
सर्वेषामेव भूतानां विस्मयः समजायत ।
आसनानि च सर्वाणि गवाश्वं च धनादिकम् १३
सर्वं तदुपजह्राते गुरवे रामकेशवौ ।
गदापरिघयुद्धे च सर्वास्त्रेषु च केशवः ॥ १४
परमां मुख्यतां प्राप्तः सर्वलोकेषु विश्रुतः ।
कश्च नारायणादन्यः सर्वरत्नविभूषितम् ॥ १५
रथमादित्यसंकाशमातिष्ठेत शचीपतेः ।
कस्य चाप्रतिमो यन्ता वज्रपाणेः प्रियः सखा १६
मातलिः संगृहीता स्यादन्यत्र पुरुषोत्तमात् ।
भोजराजात्मजो वापि कंसस्तात युधिष्ठिर ॥ १७

अस्त्रजाते बले वीर्ये कार्तवीर्यसमोऽभवत् ।
तस्य भोजपतेः पुत्राद्भोजराजन्यवर्धनात् ॥ १८
उद्विजन्ते स्म राजानः सुपर्णादिव पन्नगाः ।
चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनः ॥ १९
शतं शतसहस्राणि पादातास्तस्य भारत ।
अष्टौ शतसहस्राणि शूराणामनिवर्तिनाम् ॥ २०
अभवन्भोजराजस्य जाम्बूनदमया ध्वजाः ।
रुक्मकाञ्चनकक्ष्यास्तु रथास्तस्य युधिष्ठिर ॥ २१
अभवन्भोजपुत्रस्य द्विपास्तावद्धि तद्बलम् ।
चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनाम् ॥ २२
षोडशाश्वसहस्राणि किंशुकाभानि तस्य वै ।
अपरस्तु महाव्यूहः किशोराणां युधिष्ठिर ॥ २३
आरोहवरसंपन्नो दुर्धर्षः केनचिद्बलात् ।
स च षोडशसाहस्रः कंसभ्रातृपुरःसरः ॥ २४
सुनामा सर्वतस्त्वेनं स कंसं पर्यपालयत् ।
सगणो मिश्रको नाम षष्टिसाहस्र उच्यते ॥ २५
कंसरोषमहावेगां ध्वजानूपमहाद्रुमाम् ।
मत्तद्विपमहाग्राहां वैवस्वतवशानुगाम् ॥ २६
शस्त्रजालमहाफेनां सादिवेगमहाजलाम् ।
गदापरिघपाठीनां नानाकवचशैवलाम् ॥ २७
रथनागमहावर्तां नानारुधिरकर्दमाम् ।
चित्रकार्मुककल्लोलां रथाश्वकलिलह्रदाम् ॥ २८
महामृधनदीं घोरां योधावर्तननिस्वनाम् ।
कोऽन्यो नारायणादेत्य कंसहन्ता युधिष्ठिर ॥ २९
एष शक्ररथे तिष्ठंस्तान्यनीकानि भारत ।
व्यधमद्भोजपुत्रस्य महाभ्राणीव मारुतः ॥ ३०
तं सभार्थं सहामात्यं हत्वा कंसं सहान्वयम् ।
आनयामास मानार्हां देवकीं ससुहृद्गणाम् ॥ ३१
यशोदां रोहिणीं चैव अभिवाद्य पुनःपुनः ।
उग्रसेनं च राजानमभिषिच्य जनार्दनः ॥ ३२
अर्चितो यदुमुख्यैश्च भगवान्वासवानुजः ।
ततः पार्थिवमायान्तं सहितं सर्वराजभिः ।
सरस्वत्यां जरासन्धमजयत्पुरुषोत्तमः ॥ ३३

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

कृष्णस्य मथुरां त्यक्त्वा द्वारकागमनम् ॥ १ ॥ नरकासुरप्रतापवर्णनम् ॥ २ ॥ इन्द्रेण द्वारकामेत्य कृष्णं प्रति नरकवधप्रार्थनम् ॥ ३ ॥ गरुडमारुह्य प्राग्ज्योतिषं गतेन कृष्णेन नरके निहते धरण्या तस्मै कुण्डलार्पणम् ॥ ४ ॥

भीष्म उवाच ।
शूरसेनपुरं त्यक्त्वा ततो यादवनन्दनः ।
द्वारकां भगवान्कृष्णः प्रत्यपद्यत भारत ॥ १
ततो महात्मा यानानि रत्नानि विविधानि च ।
यथार्हं पुण्डरीकाक्षो नैर्ऋतात्प्रत्यपद्यत ॥ २
तत्र विघ्नं चरन्ति स्म दैतेयाः सहदानवैः ।
ताञ्जघान महाबाहुर्वरमत्तान्महासुरान् ॥ ३
स विघ्नमकरोत्तत्र नरको नाम नैर्ऋतः ।
अदितिं धर्षयामास कुण्डलार्थं युधिष्ठिर ॥ ४
न चासुरगणैः सर्वैः सहितैः कर्म तत्पुरा ।
कृतपूर्वं महाघोरं यदकार्षीन्महासुरः ॥ ५
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरम् ।
विषयान्तपालाश्चत्वारो यस्यासन्युद्धदुर्मदाः ॥ ६
आदेवयानमावृत्य पन्थानं पर्यवस्थिताः ।
त्रासनाः सुरसङ्घानां विरूपै राक्षसैः सह ॥ ७
हयग्रीवो निकुम्भश्च घोरः पञ्चजनस्तदा ।
मुरः पुत्रसहस्रैश्च वरमत्तो महासुरः ॥ ८
तद्वधार्थं महाबाहुरेष चक्रगदासिभृत् ।
जातो वृष्णिषु देवक्यां वासुदेवो जनार्दनः ॥ ९
तस्यास्य पुरुषेन्द्रस्य लोकप्रथिततेजसः ।
निवासो द्वारकायां तु विदितो वः प्रधानतः १०
अतीव हि पुरी रम्या द्वारका वासवक्षयात् ।
अतिवैराजमप्यद्धा प्रत्यक्षस्ते युधिष्ठिर ॥ ११
तस्मिन्देवपुरप्रख्ये सा सभा वृष्ण्युपाश्रया ।
सुधर्मेति च विख्याता योजनायतविस्तृता॥ १२
तत्र वृष्ण्यन्धकाः सर्वे रामकृष्णपुरोगमाः ।
लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते॥ १३
तत्रासीनेषु सर्वेषु कदाचिद्भरतर्षभ ।
दिव्यगन्धा ववुर्वाताः कुसुमानां च वृष्टयः॥१४
ततः सूर्यसहस्राभस्तेजोराशिर्महाद्भुतः ।
मुहूर्तमन्तरिक्षेऽभूत्ततो भूमौ प्रतिष्ठितः ॥ १५
मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः ।
वृतो देवगणैः सर्वैर्वासवः प्रत्यदृश्यत ॥ १६
रामकृष्णौ च राजा च वृष्ण्यन्धकगणैः सह ।
उत्पत्य सहसा देवं नमस्कारमकुर्वत ॥ १७
सोऽवतीर्य गजात्तूर्णं परिष्वज्य जनार्दनम् ।
सस्वजे बलदेवं च राजानं च तमाहुकम् ॥ १८
वासुदेवोद्धवौ चैव विकद्रुं च महामतिम् ।
प्रद्युम्नसाम्बनिशठाननिरुद्धं च सात्यकिम् ॥१९
गदं सारणमक्रूरं भानुझल्लिविडूरथान् ।
तथैव कृतवर्माणं चारुदेष्णं महाबलम् ॥ २०
देवकल्पान्महाराज तान्दाशार्हपुरोगमान् ।
परिष्वज्य च दृष्ट्वा च भगवान्भूतभावनः ॥ २१
वृष्ण्यन्धकमहामात्रान्परिष्वज्याथ वासवः ।
प्रगृह्य पूजां तैर्दत्तां भगवान्पाकशासनः ॥ २२
सोऽदितेर्वचनात्तात कुण्डलार्थे जनार्दनम् ।
उवाच परमप्रीतो जहि भौमं नरेश्वर ॥ २३
भीष्म उवाच ।
निहत्य नरकं भौममाहरिष्यामि कुण्डले ।
एवमुक्त्वाऽथ गोविन्दो राममेवाभ्यभाषत॥ २४
प्रद्युम्नमनिरुद्धं च साम्बं चाप्रतिमं बले ।
एतांश्चोक्त्वा तथा तत्र वासुदेवो महायशाः ॥२५
अथारुह्य सुपर्णं वै शङ्खचक्रगदासिभृत् ।
ययौ तदा हृषीकेशो देवानां हितकाम्यया ॥२६
तं प्रयान्तममित्रघ्नं देवाः सहपुरन्दराः ।
पृष्ठतोऽनुययुः प्रीत्या स्तुवन्तो विष्णुमच्युतम् २७
उग्रान्रक्षोगणान्हत्वा नरकस्य महासुरान् ।
क्षुरान्तान्मौरवान्पाशान्षट्सहस्रं ददर्श सः ॥२८
संछिद्य पाशान्छस्त्रेण मुरं हत्वा सहान्वयम् ।
शैलसङ्घानतिक्रम्य निशुम्भं च व्यपोथयत्॥२९
यः सहस्रसहस्त्वेकः सर्वान्देवानपोथयत् ।
तं जघान महावीर्यं हयग्रीवं महाबलम् ॥ ३०
अपारतेजा दुर्धर्षः सर्वयादवनन्दनः ।

मध्ये लोहितगङ्गायां भगवान्देवकीसुतः ॥ ३१
औदकायां विरूपाक्षं जघान मधुसूदनः ।
ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।
पुरमासादयामास तत्र युद्धमवर्तत ॥ ३२
तद्युद्धमभवद्घोरं तेन भौमेन भारत ।
कुण्डलार्थे सुरेशस्य नरकेण महात्मना ॥ ३३
मुहूर्तं लालयित्वा तु नरकं मधुसूदनः ।
प्रवृत्तचक्रं चक्रेण प्रममाथ बलाद्बली ॥ ३४
चक्रप्रमथितं तस्य पपात सहसा भुवि ।
उत्तमाङ्गं हताङ्गस्य वृत्रे वज्रहते यथा ॥ ३५
भूमिस्तु पतितं दृष्ट्वा प्रायच्छत्कुण्डले सुतम् ।
प्रदाय च महाबाहुमिदं वचनमब्रवीत् ॥ ३६
सृष्टस्त्वयैव मधुहंस्त्वयैव विनिपातितः ।
यथेच्छसि तथा क्रीड प्रजास्तस्यानुपालय ॥ ३७
श्रीवासुदेव उवाच ।
देवानां च मुनीनां च पितॄणां च महात्मनाम् ।
उद्वेजनीयो भूतानां ब्रह्मद्विद् पुरुषाधमः ॥ ३८
लोकद्विष्टः सुतस्ते तु देवारिर्लोककण्टकः ।
सर्वलोकनमस्कार्यामदितिं बाधयद्बली ॥ ३९
कुण्डले हृतवान्दर्पात्ततस्ते निहतः सुतः ।
नैव मन्युस्त्वया कार्यो यत्कृतं मयि भामिनि ४०
मत्प्रभावाच्च ते पुत्रो लब्धवान्गतिमुत्तमाम् ।
तस्माद्गच्छ महाभागे भारावतरणं कृतम् ॥ ४१

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

## षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

कृष्णस्य नरकं निहत्य तदीयधनरत्नादिकं शतोत्तरषोडशसहस्रस्त्रीसहितं मणिपर्वतं च गरुडमारोप्य स्वर्गलोकगमनम् ॥ १ ॥ रामकृष्णयोः अदित्यै कुण्डलादिकं दत्त्वा अदितिशचीभ्यां सत्कृतया सत्यभामया सह द्वारकां प्रत्यागमनम् ॥ २ ॥

---

भीष्म उवाच ।
निहत्य नरकं भौमं सत्यभामासहायवान् ।
सहितो लोकपालैश्च ददर्श नरकालयम् ॥ १
अथास्य गृहमासाद्य नरकस्य महात्मनः ।
ददर्श धनमक्षय्यं रत्नानि विविधानि च ॥ २
मणिमुक्ताप्रवालानि वैडूर्यविकृतानि च ।
विस्तारात्पांश्चार्कमणीन्विपुलान्स्फाटिकानपि ॥ ३
जाम्बूनदमयान्येव शातकुम्भमयानि च ।
प्रदीप्तज्वलनाभानि शीतरश्मिप्रभाणि च ॥ ४
हिरण्यवर्णं रुचिरं श्वेतमभ्यन्तरं गृहम् ।
तदक्षय्यं गृहे दृष्टं नरकस्य धनं बहु ॥ ५
न हि राज्ञः कुबेरस्य तावद्धनसमुच्छ्रयः ।
दृष्टपूर्वः पुरा साक्षान्महेन्द्रभवनेष्वपि ॥ ६
हते भौमे निशुम्भे च वासवः सगणोऽब्रवीत् ।
दाशार्हपतिमासीनमाहृत्य मणिकुण्डले ॥ ७
हेमसूत्रा महाकक्ष्यास्तोमरैर्वीर्यशालिनः ।
विमलानि पताकानि वासांसि विविधानि च ॥ ८
भीमरूपाश्च मातङ्गाः प्रवालविकृताः कुथाः ।
ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः ॥ ९
अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ।
गोभिश्चाविकृतैर्यावत्कामात्तव जनार्दन ॥ १०
एतत्ते प्रापयिष्यामि वृष्ण्यावासमरिन्दम ।
वसु यत्त्रिषु लोकेषु धर्मेणावर्जितं त्वया ॥ ११
भीष्म उवाच ।
देवगन्धर्वरत्नानि दैतेयासुरजानि च ।
यानि सन्ति हिरण्यानि नरकस्य निवेशने ॥ १२
एतत्तु गरुडे सर्वं क्षिप्रमारोप्य वासवः ।
दाशार्हपतिना सार्धमुपायान्मणिपर्वतम् ॥ १३
चित्रग्रथितमेघाभः प्रबभौ मणिपर्वतः ।
हेमचित्रवितानैश्च प्रासादैरुपशोभितः ॥ १४
हर्म्याणि च विशालानि मणिसोपानवन्ति च ।
तत्रस्था वरवर्णिन्यो ददृशुर्मधुसूदनम् ॥ १५
गन्धर्वसुरमुख्यानां प्रिया दुहितरस्तदा ।
त्रिविष्टपसमे देशे तिष्ठन्तमपराजितम् ॥ १६

परिवव्रुर्महाबाहुमेकवेणीधराः स्त्रियः ।
सर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः १७
व्रतसन्तापजः शोको नात्र कश्चिदपीडयत् ।
अरजांसि च वासांसि बिभ्रत्यः कौशिकान्यपि १८
समेत्य यदुसिंहस्य चक्रुरस्याञ्जलिं स्त्रियः ।
ऊचुश्चैनं हृषीकेशं सर्वास्ताः कमलेक्षणाः ॥ १९
नारदेन समाख्यातमस्माकं पुरुषोत्तम ।
आगमिष्यति गोविन्दः सुरकार्यार्थसिद्धये ॥२०
सोऽसुरं नरकं हत्वा निशुम्भं मुरमेव च ।
भौमं च सपरीवारं हयग्रीवं च दानवम् ॥ २१
तथा पञ्चजनं चैव प्राप्स्यते धनमक्षयम् ।
सोऽचिरेणैव कालेन युष्मन्मोक्ता भविष्यति २२
एवमुक्त्वागमद्धीरो देवर्षिर्नारदस्तथा ।
त्वां चिन्तयानाः सततं तपो घोरमुपास्महे ॥२३
कालेऽतीते महाबाहुं कदा द्रक्ष्याम माधवम् ।
इत्येवं हृदि सङ्कल्पं कृत्वा पुरुषसत्तम ।
तपश्चराम सततं रक्ष्यमाणा हि दानवैः ॥ २४
ततोऽस्मत्प्रियकामार्थं भगवान्मारुतोऽब्रवीत् ।
यथोक्तं नारदेनाथ न चिरात्तद्भविष्यति ॥ २५
भीष्म उवाच ।
तासां परमनारीणामृषभाक्षं पुरःस्थितम् ।
ददृशुर्देवगन्धर्वा गृष्टीनामिव गोपतिम् ॥ २६
तस्य चन्द्रोपमं वक्त्रमुदीक्ष्य मुदितेन्द्रियाः ।
संप्रहृष्टा महाबाहुमिदं वचनमब्रुवन् ॥ २७
सत्यव्रत पुरा वायुरिदमस्मानिहाब्रवीत् ।
सर्वभूतहितज्ञश्च महर्षिरपि नारदः ॥ २८
विष्णुर्नारायणो देवः शङ्खचक्रगदासिभृत् ।
स भौमं नरकं हत्वा भर्ता वो भविता ध्रुवम् ॥२९
दिष्ट्या तस्यर्षिमुख्यस्य नारदस्य महात्मनः ।
वचनादेव सत्यं नो भर्ता भवितुमर्हसि ॥ ३०
यत्प्रियं बत पश्याम श्रुतं प्रियमरिन्दम ।
दर्शनेन कृतार्थाः स्मो वयमस्य महात्मनः ॥३१
उवाच हि यदुश्रेष्ठः सर्वास्ता जातमन्मथाः ।
यथा ब्रूत विशालाक्ष्यस्तत्सर्वं वो भविष्यति ॥३२
ततस्ता गरुडे सर्वाः सरत्नधनसंचयाः ।
क्षिप्रमारोपयाश्चक्रे भगवान्देवकीसुतः ॥ ३३
सपक्षिगणमातङ्गं सव्यालमृगपन्नगम् ।
शाखामृगगणैर्जुष्टं सप्रस्तरशिलातलम् ॥ ३४
न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ।
सप्रपातमहासानुं विचित्रशिखिसङ्कुलम् ॥ ३५
स महेन्द्रानुजः शौरिश्चकार गरुडोपरि ।
पश्यतां सर्वभूतानामुत्पाट्य मणिपर्वतम् ॥ ३६
उपेन्द्रं बलदेवं च वासवं च महाबलम् ।
स्वपक्षबलविक्षेपैर्महाद्रिशिखरोपमः ॥ ३७
दिक्षु सर्वासु संरावं स चक्रे गरुडो वहन् ।
आरुजन्पर्वताग्राणि पादपांश्च समुत्क्षिपन् ॥ ३८
सञ्जहार महाभ्राणि वैश्वानरपथं गतः ।
ग्रहनक्षत्रताराणां सप्तर्षीणां स्वतेजसा ॥ ३९
प्रभाजालमतिक्रम्य चाश्विनोश्च परन्तप ।
प्राप्य पुण्यतमं स्थानं देवलोकमरिन्दमः ॥ ४०
शक्रसद्म समासाद्य चावरुह्य जनार्दनः ।
सोऽभिवाद्यादितेः पादावर्चितः सर्वदैवतैः ।
ब्रह्मदक्षपुरोगैश्च प्रजापतिभिरेव च ॥ ४१
अदितेः कुण्डले दिव्ये ददावथ तदा विभुः ।
रत्नानि च परार्ध्याणि रामेण सह केशवः ॥ ४२
प्रतिगृह्य च तत्सर्वमदितिर्वासवानुजम् ।
पूजयामास दाशार्हं रामं च विगतज्वरा ॥ ४३
शची महेन्द्रमहिषी कृष्णस्य महिषीं तदा ।
सत्यभामां तु संगृह्य अदित्यै सा न्यवेदयत् ॥४४
सा तस्याः सत्यभामायाः कृष्णप्रियचिकीर्षया ।
वरं प्रादाद्देवमाता सत्यायै विगतज्वरा ॥ ४५
जरां न यास्यसि शुभे यावत्कृष्णोऽस्ति भूतले ।
सर्वगन्धगुणोपेता भविष्यसि वरानने ॥ ४६
विसृज्य सत्यभामा वै पौलोमीं च सुमध्यमा ।
शच्यापि समनुज्ञाता ययौ कृष्णनिवेशनम् ॥ ४७
संपूज्यमानस्त्रिदशैर्महर्षिगणसेवितः ।
द्वारकां प्रययौ कृष्णो देवलोकादरिन्दमः ॥४८

शीघ्रादेत्य महाबाहुर्दीर्घमध्वानमच्युतः । वर्धमानपुरद्वारमाससाद सुरोत्तमः ॥ ४९

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

## सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

द्वारकावर्णनम् ॥ १ ॥ रुक्मिणीसत्यभामादिगृहवर्णनम् ॥ २ ॥ कृष्णेन स्वर्गादानीतस्य पारिजातस्य प्रतिष्ठापनमुद्यानवर्णनं च ॥ ३ ॥

भीष्म उवाच ।
तां पुरीं द्वारकां दृष्ट्वा विष्णुर्नारायणो हरिः ।
हृष्टः सर्वार्थसंपन्नः प्रवेष्टुमुपचक्रमे ॥ १
सोऽपश्यद्वृक्षषण्डांश्च रम्यान्नानाजनान्बहून् ।
समन्ततो द्वारवत्यां नानापुष्पफलान्वितान् ॥ २
अर्कचन्द्रप्रतीकाशैर्मेरुकूटनिभैर्गृहैः ।
द्वारकामावृतां रम्यां सुकृतां विश्वकर्मणा ॥ ३
पद्मषण्डाकुलाभिश्च हंससेवितवारिभिः ।
गङ्गासिन्धुप्रकाशाभिः परिघाभिरलङ्कृताम् ॥ ४
प्राकारेणार्कवर्णेन पाण्डरेण विराजिताम् ।
वियन्मूर्ध्नि निविष्टेन द्यामिवाभ्रपरिच्छदाम् ॥ ५
नन्दनप्रतिमैश्चापि मिश्रकप्रतिमैर्वनैः ।
तत्र सा विहिता साक्षान्नगरी विश्वकर्मणा ॥ ६
काञ्चनैर्मणिसोपानैरुपेता जनहर्षिणी ।
गीतघोषमहाघोषैः प्रासादप्रवरैः शुभा ॥ ७
तस्मिन्पुरवरश्रेष्ठे दाशार्हाणां यशस्विनाम् ।
वेश्मानि जहृषे दृष्ट्वा भगवान्पाकशासनः ॥ ८
समुच्छ्रितपताकानि पारिप्लवनिभानि च ।
काञ्चनाभानि भास्वन्ति मेरुकूटनिभानि च ॥ ९
सुधापाण्डरशृङ्गैश्च शातकुम्भपरिच्छदैः ।
रत्नसानुमहाशृङ्गैः सर्वरत्नसमन्वितैः ॥ १०
सहर्म्यैः सार्धचन्द्रैश्च सनिर्यूहैः सपञ्जरैः ।
सयन्त्रगृहसंबाधैः सधातुभिरिवाद्रिभिः ॥ ११
मणिकाञ्चनभौमैश्च सुधामृष्टतलैस्तथा ।
जाम्बूनदमयद्वारैर्वैडूर्यविकृतार्गलैः ॥ १२
सर्वर्तुसुखसंस्पर्शैर्महाधनपरिच्छदैः ।
रम्यसानुगृहैः शृङ्गैर्विचित्रैरिव पर्वतैः ॥ १३
पञ्चवर्णसवर्णैश्च पुष्पवृष्टिसमप्रभैः ।
तुल्यैः पर्जन्यनिर्घोषैर्ह्रादैर्भोगवती यथा ॥ १४
कृष्णध्वजोपवाह्यैश्च दाशार्हायुधरोहितैः ।
वृष्णिवीरमयूरैश्च स्त्रीसहस्रप्रजाकुलैः ॥ १५
वासुदेवेन्द्रपर्जन्यैर्गृहमेघैरलङ्कृता ।
ददृशे द्वारकाऽतीव मेघैर्द्यौरिव संवृता ॥ १६
साक्षाद्भगवतो वेश्म विहितं विश्वकर्मणा ।
ददृशुर्वासुदेवस्य चतुर्योजनमायतम् ॥ १७
तावदेव सुविस्तीर्णं सुसंपूर्णं महाधनैः ।
प्रासादवरसंपन्नं युक्तं जगति पर्वतैः ॥ १८
यं चकार महाभागस्त्वष्टा वासवचोदितः ।
प्रासादं हेमनाभस्य सर्वतो योजनायतम् ॥ १९
मेरोरिव गिरेः शृङ्गमुच्छ्रितं काञ्चनालयम् ।
रुक्मिण्याः प्रवरो वासो निर्मितः सुमहात्मना २०
सत्यभामा पुनर्वेश्म सदा वसति पाण्डरम् ।
विचित्रमणिसोपानं यं विदुः शीतवानिति ॥ २१
विमलादित्यवर्णाभिः पताकाभिरलङ्कृतम् ।
व्यक्तबद्धं यथोद्देशे चतुर्दशमहाध्वजम् ॥ २२
सर्वप्रासादमुख्योऽत्र जाम्बवत्या विभूषितः ।
प्रभाया जृम्भणैश्चित्रैस्त्रैलोक्यमिव भासयन् ॥ २३
यस्तु पाण्डरवर्णाभस्तयोरन्तरमाश्रितः ।
विश्वकर्माकरोदेनं कैलासशिखरोपमम् ॥ २४
जाम्बूनदप्रदीप्ताग्रः प्रदीप्तज्वलनोपमः ।
सागरप्रतिमोऽतिष्ठन्मेरुरित्यभिविश्रुतः ॥ २५
तस्मिन्गान्धारराजस्य दुहिता कुलशालिनी ।
सुकेशी नाम विख्याता केशवेन निवेशिता ॥ २६
पद्मकूट इति ख्यातः पद्मवर्णो महाप्रभः ।
सुप्रभाया महाबाहो वासः स परमोच्छ्रितः ॥ २७
यस्तु सूर्यप्रभो नाम प्रासादवर उच्यते ।

लक्षणायाः कुरुश्रेष्ठ स दत्तः शार्ङ्गधन्वना ॥ २८
वैडूर्यवरवर्णाभः प्रासादो हरितप्रभः ।
श्वेतजाला हि यत्रैव यत्रैव च निवेशिता ॥ २९
यं विदुः सर्वभूतानि हरिरित्येव भारत ।
सुमित्रविजयावासो देवर्षिगणपूजितः ॥ ३०
महिष्या वासुदेवस्य भूषणं सर्ववेश्मनाम् ।
यस्तु प्रासादमुख्योऽत्र विहितः सर्वशिल्पिभिः॥
महिष्या वासुदेवस्य केतुमानिति विश्रुतः ।
प्रासादो विरजो नाम विरजस्को महात्मनः ३२
उपस्थानगृहं तात केशवस्य महात्मनः ।
यस्तु प्रासादमुख्योऽत्र यं त्वष्टा व्यदधात्स्वयं ३३
योजनायतविष्कम्भं सर्वरत्नमयं विभोः ।
तेषां तु विहिताः सर्वे रुक्मदण्डाः पताकिनः ३४
सदने वासुदेवस्य मार्गसंजनना ध्वजाः ।
घण्टाजालानि तत्रैव सर्वेषां च निवेशने ॥ ३५
आहृत्य यदुसिंहेन वैजयन्तच्छलो महान् ।
हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरो महत् ॥ ३६
षष्टितालसमुत्सेधमर्धयोजनविस्तृतम् ।
सकिन्नरमहानादं तदप्यमिततेजसः ॥ ३७
पश्यतां सर्वभूतानां त्रिषु लोकेषु विश्रुतम् ।
आदित्यपथगं यत्तन्मेरोः शिखरमुत्तमम् ॥ ३८
जाम्बूनदमयं दिव्यं त्रिषु लोकेषु विश्रुतम् ।
तदप्युत्पाट्य कृच्छ्रेण स्वं निवेशनमाहृतम् ॥ ३९
भ्राजमानं पुरा तत्र सर्वौषधिविदीपितम् ।
यमिन्द्रभवनाच्छौरिराजहार परन्तपः ॥ ४०
पारिजातः स तत्रैव केशवेन निवेशितः ।
लेपहस्तशतैर्जुष्टो विमानैश्च हिरण्मयैः ॥ ४१
विहिता वासुदेवेन तत्रैव च महाद्रुमाः ।
पद्माकुलजलोपेता रक्तसौगन्धिकोत्पलाः ॥ ४२
मणिमौक्तिकवालूकाः पुष्करिण्यः सरांसि च ।
तासां परमकूलानि शोभयन्ति महाद्रुमाः ॥ ४३
सालतालाश्वकर्णाश्च शतशाखाश्च रोहिणः ।
भल्लातककपित्थाश्च इन्द्रवृक्षाश्च चम्पकाः ॥ ४४
खादिरा मृतकाश्चैव समन्तात्परिरोपिताः ।
ये च हैमवता वृक्षा ये च नन्दनजास्तथा ॥ ४५
आहृत्य यदुसिंहेन तेऽपि तत्र निवेशिताः ।
रक्तपीतारुणप्रख्याः सितपुष्पाश्च पादपाः ॥ ४६
सर्वर्तुफलपूर्णास्ते ते च काननसिन्धुषु ।
सहस्रपत्रपद्माश्च मन्दराश्च सहस्रशः ॥ ४७
अशोकाः कर्णिकाराश्च तिलका नाग मल्लिकाः ।
कुरका नागपुष्पाश्च चम्पकास्तृणपुल्लिकाः ॥ ४८
सप्तपर्णाः कवन्धाश्च नीपाः कुरवकास्तथा ।
केतकाः केसराश्चैव हिन्तालतलताटकाः ॥ ४९
तालाः प्रलम्बा वकुलाः पिण्डिका बीजपूरकाः ।
द्रुतामलकखर्जूरा महिता जम्बुकास्तथा ॥ ५०
आम्राः पनसवृक्षाश्च चम्पकास्तिलतिन्दुकाः ।
लिकुचामृतकाश्चैव क्षीरिका कर्णिका तथा ॥ ५१
नालिकेरेङ्गुदाश्चैव उत्क्रोशकवनानि च ।
कदली जातमल्ली च पाटली कुमुदोत्पलाः ॥ ५२
नीलोत्पलकपूर्णाश्च वाप्यः कूपाः सहस्रशः ।
फुल्लाशोककपित्थाश्च तैस्तीर्त्वा वन्धुजीवकाः ५३
प्रियालाशोकवादिर्याः प्राचीनाश्चापि सर्वशः ।
प्रियङ्गुबदरीभिश्च यवैः स्पन्दनचन्दनैः ॥ ५४
शचीपीलुपलाशैश्च पलाशवधपिप्पलैः ।
उदुम्बरैश्च बिल्वैश्च पालाशैः पारिभद्रकैः ॥ ५५
इन्द्रवृक्षार्जुनैश्चैव अश्वत्थैश्चिरबिल्वकैः ।
भौमगञ्जनवृक्षैश्च भल्लाभैरश्वसाह्वयैः ॥ ५६
सर्जैस्ताम्बूलवल्लीभिर्लवङ्गैः क्रमुकैस्तथा ।
वंशैश्च विविधैस्तत्र समन्तात्परिरोपितैः ॥ ५७
ये च नन्दनजा वृक्षा ये च चैत्ररथे वने ।
सर्वे ते यदुनाथेन समन्तात्परिरोपिताः ॥ ५८
समाहिता महानद्यः पीतलोहितवालुकाः ।
तस्मिन्गृहवरे रम्ये मणिशर्कसवालुकाः ॥ ५९
मत्तबर्हिणनादाश्च कोकिलाश्च मदावहाः ।
बभूवुः परमोपेताः सर्वे जगति पर्वताः ॥ ६०
तत्रैव गजयूथानि तत्र गोमहिषास्तथा ।
निवासाश्च कृतास्तत्र वराहा मृगपक्षिणाम् ॥ ६१

विश्वकर्मकृतः शैलः प्राकारस्तत्र वेश्मनि ।
व्यक्तकिष्कुशतोद्यामः सुधारससमप्रभः ॥ ६२
तेन ते च महाशैलाः सरितश्च सरांसि च ।
परिक्षिप्तानि वै तस्य वनान्युपवनानि च ॥ ६३

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

कृष्णदर्शनाय वसुदेवादीनामागमनम् ॥ १ ॥ रामकृष्णाभ्यां पित्रादिवन्दनपूर्वकं बन्धुभ्यो रत्नादिवितरणम् ॥ २ ॥ इन्द्रस्य कृष्णचरितप्रशंसनपूर्वकं स्वलोकगमनम् ॥ ३ ॥

भीष्म उवाच ।
एवमालोकयाञ्चक्रुर्द्वारकामृषभास्त्रयः ।
उपेन्द्रबलदेवौ च वासवश्च महायशाः ॥ १
ततस्तं पाण्डरं शौरिर्मूर्ध्नि तिष्ठन्गरुत्मतः ।
प्रीतः शङ्खमुपाध्मासीद्द्विषतां रोमहर्षणम् ॥ २
तस्य शङ्खस्य शब्देन सागरश्चुक्षुभे भृशम् ।
ररास च नभः सर्वं तच्चित्रमभवत्तदा ॥ ३
पाञ्चजन्यस्य निर्घोषं निशम्य कुकुरान्धकाः ।
प्रीयमाणाः समाजग्मुरालोक्य मधुसूदनम् ॥ ४
वसुदेवं पुरस्कृत्य वेणुशङ्खरवैः सह ।
उग्रसेनो ययौ राजा वासुदेवनिवेशनम् ॥ ५
आनन्दितुं पर्यचरन्स्वेषु वेश्मसु देवकी ।
रोहिणी च ययौ देशमाहुकस्य च याः स्त्रियः॥६
हता ब्रह्मद्विषः सर्वे जयन्त्यन्धकवृष्णयः ।
एवमुक्तः सह स्त्रीभिरक्षतैर्मधुसूदनः ॥ ७
ततः शौरिः सुपर्णेन स्वं निवेशनमभ्ययात् ।
चकाराथ यथोद्देशमीश्वरो मणिपर्वतम् ॥ ८
ततो धनानि रत्नानि सभायां मधुसूदनः ।
निधाय पुण्डरीकाक्षः पितुर्दर्शनलालसः ॥ ९
ततः सान्दीपिनिं पूर्वं ब्राह्मणं चापि भारत ।
यथान्यायं वासुदेव उपस्पृष्ट्वा महायशाः ॥ १०
ववन्दे पृथुताम्राक्षः प्रीयमाणो महायशाः ।
तथाऽश्रुपरिपूर्णाक्षमानन्दभृतचेतसम् ॥ ११
ववन्दे सह रामेण पितरं वासवानुजः ।
ताभ्यां च मूर्ध्न्युपाघ्रातः केशवः परवीरहा॥ १२
यथाश्रेष्ठमुपागम्य सात्वतान्यदुनन्दनः ।
सर्वेषां नाम जग्राह दाशार्हाणामधोक्षजः ॥ १३
ततः सर्वाणि वित्तानि सर्वरत्नमयानि च ।
व्यभजत्तानि तेभ्योऽथ सर्वेभ्यो यदुनन्दनः॥१४
सा केशवमहामात्रैर्महेन्द्रप्रतिमैः सभा ।
शुशुभे वृष्णिशार्दूलैः सिंहैरिव गिरेर्गुहा ॥ १५
अथासनगतान्सर्वानुवाच विबुधाधिपः ।
शुभया हर्षयन्वाचा महेन्द्रस्तान्महायशाः ।
कुकुरान्धकमुख्यांश्च तं च राजानमाहुकम् ॥१६
इन्द्र उवाच ।
यदर्थं जन्म कृष्णस्य मानुषेषु महात्मनः ।
यत्कृतं वासुदेवेन तद्वक्ष्यामि समासतः ॥ १७
अयं शतसहस्राणि दानवानामरिन्दमः ।
निहत्य पुण्डरीकाक्षः पातालविवरं ययौ ॥ १८
यच्च नाधिगतं पूर्वैः प्रह्लादबलिशम्बरैः ।
तदिदं शौरिणा वित्तं प्रापितं भवतामिह ॥ १९
सपाशं मुरमाक्रम्य पाञ्चजन्यं च धीमता ।
शिलासङ्घानतिक्रम्य निशुम्भः सगणो हतः॥२०
हयग्रीवश्च विक्रान्तो दानवो निहतो बली ।
मथितश्च मृधे भौमः कुण्डले चाहृते पुनः ॥ २१
पुनर्बाणवधे शौरिमादित्या वसुभिः सह ।
मन्मुखा आगमिष्यन्ति साध्याश्च मधुसूदनम्२२
एवमुक्त्वा ततः सर्वानामन्त्र्य कुकुरान्धकान् ।
सस्वजे रामकृष्णौ च वसुदेवं च वासवः ॥ २३
प्रद्युम्नसाम्बप्रमुखाननिरुद्धं च सारणम् ।
बभ्रुं झल्लिं गदं भानुं चारुदेष्णं च वृत्रहा ॥ २४
सत्कृत्य सारणाक्रूरौ पुनराभाष्य सात्यकिम् ।
सस्वजे वृष्णिराजानमाहुकं कुकुराधिपम् ।
भोजं च कृतवर्माणमन्यांश्चान्धकवृष्णिषु ॥ २५

आमन्त्र्य देवप्रवरैर्वासवो वासवानुजम् ।
ततः श्वेताचलप्रख्यं गजमैरावतं प्रभुः ॥ २६
पश्यतां सर्वभूतानामारुरोह शचीपतिः ।
पृथिवीं चान्तरिक्षं च दिवं च वरवारणम् ॥ २७
मुखाडम्बरनिर्घोषैः पूरयन्तमिवासकृत् ।
हैमयन्त्रमहाकक्ष्यं हिरण्मयविषाणिनम् ॥ २८
मनोहरकुथास्तीर्णं सर्वरत्नविभूषितम् ।
नित्यस्रुतमदस्रावं क्षरन्तमिव तोयदम् ॥ २९
दिशागजं महामात्रं काञ्चनस्रजमास्थितः ।
प्रबभौ मन्दराग्रस्थः प्रतपन्भानुमानिव ॥ ३०
ततो वज्रमयं भीमं प्रगृह्य परमाङ्कुशम् ।
ययौ बलवता सार्धं पावकेन शचीपतिः ॥ ३१
तं करेणुगजव्रातैर्विमानैश्च मरुद्गणाः ।
पृष्ठतोऽनुययुः प्रीताः कुबेरवरुणग्रहाः ॥ ३२
स वायुपक्षमास्थाय वैश्वानरपथं गतः ।
प्राप्य सूर्यपथं देवस्तत्रैवान्तरधीयत ॥ ३३

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

कृष्णेनाहृतविभूतिविलोकनाय देवकीरुक्मिण्यादिस्त्रीणामागमनम् ॥ १ ॥ सभामागतायाः यशोदासुतायाः रामकृष्णाभ्यां सत्कारः ॥ २ ॥ सर्वेषां स्वस्वभवनगमनम् ॥ ३ ॥

भीष्म उवाच ।
ततः सर्वदशार्हाणामाहुकस्य च याः स्त्रियः ।
नन्दगोपस्य महिषी यशोदा लोकविश्रुता ॥ १
रेवती च महाभागा रुक्मिणी च पतिव्रता ।
सत्या जाम्बवती चोभे गान्धारी शिंशुमापि च २
विशोका लक्षणा चापि सुमित्रा केतुमा तथा ।
वासुदेवमहिष्योऽन्याः श्रिया सार्धं ययुस्तदा ॥ ३
विभूतिं द्रष्टुमनसः केशवस्य महात्मनः ।
प्रीयमाणाः सभां जग्मुरालोकयितुमच्युतम् ॥ ४
देवकी सर्वदेवीनां रोहिणी च पुरस्कृता ।
ददृशुर्देवमासीनं कृष्णं हलभृता सह ॥ ५
तौ तु पूर्वमतिक्रम्य रोहिणीमभिवाद्य च ।
अभ्यवादयतां देवौ देवकीं रामकेशवौ ॥ ६
सा ताभ्यामृषभाक्षाभ्यां पुत्राभ्यां शुशुभेऽधिकं ।
देवकी देवमातेव मित्रेण वरुणेन च ॥ ७
ततः प्राप्ता यशोदाया दुहिता वै क्षणेन हि ।
जाज्वल्यमाना वपुषा प्रभयाऽतीव भारत ॥ ८
एकानङ्गेति यामाहुः कन्यां वै कामरूपिणीम् ।
यत्कृते सगणं कंसं जघान पुरुषोत्तमः ॥ ९
ततः स भगवान्रामस्तामुपाक्रम्य भामिनीम् ।
मूर्ध्न्युपाघ्राय सव्येन परिजग्राह पाणिना ॥ १०
तां च तत्रोपसंप्राप्य प्रियामिव सखीमिमाम् ।
दक्षिणेन कराग्रेण परिजग्राह माधवः ॥ ११
ददृशुस्तां सभामध्ये भगिनीं रामकृष्णयोः ।
रुक्मपद्मशयां पद्मश्रीमिवोत्तमनाभयोः ॥ १२
अथाक्षतमहावृष्ट्या लाजपुष्पघृतैरपि ।
वृष्णयोऽवाकिरन्प्रीताः सङ्कर्षणजनार्दनौ ॥ १३
सबालाः सहवृद्धाश्च ये ज्ञातिकुलबान्धवाः ।
उपोपविविशुः प्रीता वृष्णयो मधुसूदनम् ॥ १४
पूज्यमानो महाबाहुः पौराणां रतिवर्धनः ।
विवेश पुरुषव्याघ्रः स्ववेश्म मधुसूदनः ॥ १५
रुक्मिण्या सहितो देव्या प्रमुमोद सुखी सुखम् ।
अनन्तरं च सत्याया जाम्बवत्याश्च भारत ॥ १६
सर्वासां च यदुश्रेष्ठो गेहे गेहे विहारवान् ।
जगाम च हृषीकेशो रुक्मिण्याः सदनं पुनः १७
एष तात महाबाहो विजयः शार्ङ्गधन्वनः ।
एतदर्थं च जन्माहुर्मानुषेषु महात्मनः ॥ १८

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

शर्ववरगर्वितेन बाणासुरेण स्वतनयया उषया सह गूढं रममाणस्य अनिरुद्धस्य कारागृहप्रापणम् ॥ १ ॥ नारदाद्विदितपौत्रवृत्तेन कृष्णेन सरामप्रद्युम्नेन बाणं निर्जित्य उषया सह अनिरुद्धानयनम् ॥ २ ॥

भीष्म उवाच ।
द्वारकायां ततः कृष्णः स्वदारेषु दिवानिशम् ।
सुखं लब्ध्वा महाराज प्रमुमोद महायशाः ॥ १
पौत्रस्य कारणाच्चक्रे विबुधानां प्रियं तदा ।
सवासवैः सुरैः सर्वैर्दुष्करं भरतर्षभ ॥ २
बाणो नामाऽभवद्राजा बलेर्ज्येष्ठसुतो बली ।
वीर्यवान्भरतश्रेष्ठ स च बाहुसहस्रवान् ॥ ३
ततस्तेपे तपस्तीव्रं सत्वेन मनसा नृप ।
रुद्रमाराधयामास स च बाणः समा बहु ॥ ४
तस्मै बहुवरा दत्ताः शङ्करेण महात्मना ।
तांश्च लब्ध्वा वरान्बाणो दुर्लभानसुरैर्भुवि ॥ ५
स शोणितपुरे राज्यं चकाराप्रतिमो बली ।
त्रासिताश्च सुराः सर्वे तेन बाणेन पाण्डव ॥ ६
विजित्य विबुधान्सेन्द्रान्बाणः संवत्सरान्बहून् ।
अशासत महद्राज्यं कुबेर इव भारत ॥ ७
ततो राजन्नुषा नाम बाणस्य दुहिता यथा ।
येनोपायेन कौन्तेय अनिरुद्धो महाद्युतिः ॥ ८
प्राद्युम्निस्तामुषां प्राप्य प्रच्छन्नः प्रमुमोद ह ।
अथ बाणो महातेजास्तदा तत्र युधिष्ठिर ॥ ९
तं गुह्यनिलयं ज्ञात्वा प्राद्युम्निं सुतया तदा ।
गृहीत्वा कारयामास वस्तुं कारागृहे बलात् ॥१०
स कुमारः सुखार्होऽथ तदा दुःखसमन्वितः ।
बाणेन घातितो राजन्ननिरुद्धो मुमोह च ॥ ११
एतस्मिन्नेव काले तु नारदो मुनिपुङ्गवः ।
द्वारकां प्राप्य कौन्तेय कृष्णं दृष्ट्वा वचोऽब्रवीत् १२
कृष्ण कृष्ण महाबाहो यदूनां कीर्तिवर्धन ।
पौत्रस्ते बाध्यमानोऽत्र बाणेनामिततेजसा ॥१३
कृच्छ्रं प्राप्तोऽनिरुद्धो वै शेते कारागृहे सदा ।
एतदुक्त्वा सुरर्षिर्वै बाणस्याथ पुरं ययौ ॥ १४
नारदस्य वचः श्रुत्वा ततो राजञ्जनार्दनः ।
आहूय बलदेवं हि प्रद्युम्नं च महाद्युतिम् ॥ १५
आरुरोह गरुत्मन्तं ताभ्यां सह जनार्दनः ।
ततः सुपर्णमारुह्य जयाय भरतर्षभ ॥ १६
जग्मुः क्रुधा महावीर्या बाणस्य नगरं प्रति ।
अथासाद्य महाराज तत्पुरं ददृशुश्च ते ॥ १७
ताम्रप्राकारसंगुप्तां हेमप्रासादसङ्कुलाम् ।
दृष्ट्वा मुदा युताः सर्वे विस्मयं परमं ययुः ॥ १८
तथा बाणपुरस्यासन्द्वारस्था देवताः सदा ।
महेश्वरो गुहश्चैव भद्रकाली विनायकः ॥ १९
अथ कृष्णो बलाज्जित्वा द्वारपालान्युधिष्ठिर ।
सुसंक्रुद्धो महातेजाः शङ्खचक्रगदासिभृत् ॥ २०
आससादोत्तरद्वारं शङ्करेणाभिरक्षितम् ।
तत्र तस्थौ महातेजाः शूलपाणिर्महेश्वरः ॥ २१
पिनाकं सशरं गृह्य बाणस्य हितकाम्यया ।
ज्ञात्वा तमागतं कृष्णं व्यादितास्यमिवान्तकम् २२
ततस्तौ चक्रतुर्युद्धं वासुदेवमहेश्वरौ ।
तद्युद्धमभवद्घोरमचिन्त्यं रोमहर्षणम् ॥ २३
अन्योन्यं तौ ततक्षाते अन्योन्यजयकाङ्क्षिणौ ।
दिव्यान्यस्त्राणि तौ देवौ क्रुद्धौ मुमुचतुस्तदा २४
ततः कृष्णो रणं कृत्वा मुहूर्तं शूलपाणिना ।
विजित्य तं महादेवं ततो युद्धे जनार्दनः ।
अन्यांश्च जित्वा द्वारस्थान्प्रविवेश पुरोत्तमम् ॥२५
प्रविश्य बाणमासाद्य स तत्राथ जनार्दनः ।
चक्रे युद्धं महाक्रुद्धस्तेन बाणेन पाण्डव ॥ २६
बाणोऽपि सर्वशस्त्राणि शितानि भरतर्षभ ।
सुसंक्रुद्धस्तदा युद्धे पातयामास केशवे ॥ २७
पुनरुद्यम्य शस्त्राणि सहस्रं सर्वबाहुभिः ।
मुमोच बाणः संक्रुद्धः कृष्णं प्रति रणाजिरे ॥२८
ततः कृष्णस्तदा कृत्त्वा तानि सर्वाणि भारत ।
कृत्त्वा मुहूर्तं बाणेन युद्धं राजन्नधोक्षजः ॥ २९
चक्रमुद्यम्य रोषाद्वै दिव्यं शस्त्रोत्तमं ततः ।
सहस्रबाहूंश्चिच्छेद बाणस्यामिततेजसः ॥ ३०

ततो बाणो महाराज कृष्णेन भृशपीडितः ।
भिन्नबाहुः पपाताशु विशाख इव पादपः ॥३१
स पातयित्वा बाणैस्तं बाणं कृष्णस्त्वरान्वितः ।
प्राद्युम्निं मोचयामास क्षिप्रं राजगृहात्तदा ॥ ३२
मोक्षयित्वाऽथ गोविन्दः प्राद्युम्निं सह भार्यया ।
बाणस्य सर्वरत्नानि असङ्ख्यानि जहार सः ॥३३
गोधनानि च सर्वस्वं स बाणस्यालये बलात् ।
जहार च हृषीकेशो यदूनां कुलवर्धनः ॥ ३४
ततः स सर्वरत्नानि चाहृत्य मधुसूदनः ।
क्षिप्रमारोपयाश्चक्रे सर्वस्वं गरुडोपरि ॥ ३५
त्वरयाऽथ स कौन्तेय बलदेवं महाबलम् ।
प्राद्युम्निं च महावीर्यमनिरुद्धं महाद्युतिम् ॥ ३६
उषां च सुन्दरीं राजन्भृत्यदारगणैः सह ।
सर्वानेतान्समारोप्य गरुडोपरि वीर्यवान् ॥ ३७
मुदा युक्तो महातेजाः पीताम्बरधरो बली ।
दिव्याभरणचित्राङ्गः शङ्खचक्रगदासिभृत् ।
आरुरोह गरुत्मन्तमुदयं भास्करो यथा ॥ ३८

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

---

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

भीष्मेण नरकबाणासुरप्रमुखदुष्टनिग्रहादिरूपातीतानागतकृष्णचरित्रनिरूपणम् ॥ १ ॥

भीष्म उवाच ।
सूदिता द्वारपालाश्च निशुम्भनरकौ हतौ ।
कृतक्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति॥१
शौरिणा पृथिवीपालास्त्रासिता भरतर्षभ ।
धनुषश्च प्रणादेन पाञ्चजन्यस्वनेन च ॥ २
मेघप्रख्यैरनेकैश्च दाक्षिणात्याभिसंवृतम् ।
रुक्मिणं त्रासयामास केशवो भरतर्षभ ॥ ३
ततः पर्जन्यघोषेण रथेनादित्यवर्चसा ।
उवाह महिषीं भोज्यामेष चक्रगदाधरः ॥ ४
जारूथ्य आहृतक्रोधः शिशुपालश्च निर्जितः ।
वक्रश्च स हतः सङ्ख्ये शतधन्वा च क्षत्रियः ॥ ५
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुकः ।
हतः सौभपतिश्चैव साल्वश्च कृतधन्वना ॥ ६
पर्वतानां सहस्रं च चक्रेण पुरुषोत्तमः ।
विभज्य पुण्डरीकाक्षो द्युमत्सेनमपोथयत् ॥ ७
महेन्द्रशिखरे चैव निमेषान्तरचारिणौ ।
जग्राह भरतश्रेष्ठ वानरावभितश्चरौ ॥ ८
इरावत्यां महाभोजो वह्निसूर्यसमो बले ।
गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना ॥ ९
अक्षप्रपत्तने राजन्नवहेलनतत्परौ ।
उभौ तावपि कृष्णेन स्वराष्ट्रे विनिपातितौ ॥१०
दग्धा वाराणसी तात केशवेन महात्मना ।
पाण्ड्यं पौण्ड्रं च मात्स्यं च कलिङ्गं च जनार्दनः ११
जघान सहितान्सर्वानङ्गराजं च माधवः ॥ १२
एष चैव शतं हत्वा रथेन क्षत्रपुङ्गवान् ।
गान्धारीमवहत्कृष्णो महिषीं यादवर्षभः ॥ १३
अथ गाण्डीवधन्वानं क्रीडार्थं मधुसूदनः ।
जिगाय भरतश्रेष्ठ कुन्त्याश्च प्रमुखे विभुः ॥ १४
द्रौणिं कृपं च कर्णं च भीमसेनं सुयोधनम् ।
युद्धाय सहितान्राजञ्जिगाय भरतर्षभ ॥ १५
बभ्रोश्च प्रियमन्विच्छन्नेष चक्रगदाधरः ।
वेणुदारिवृतां भार्यां प्रममाथ युधिष्ठिर ॥ १६
पर्याप्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
वेणुदारिवशे युक्तां जिगाय मधुसूदनः ॥ १७
अवाप्य तपसा वीर्यं बलमोजश्च भारत ।
त्रासिताः सगणाः सर्वे बाणेन विबुधाधिपाः १८
वज्राशनिगदाबाणैस्ताडयद्भिरनेकशः ।
तस्य नासीद्रणे मृत्युर्देवैरपि सवासवैः ॥ १९
सोऽभिभूतश्च कृष्णेन न हतश्च महात्मना ।
छित्वा बाहुसहस्रं तु गोविन्देन महात्मना ॥२०

---

जारूथ्ये यागविशेषे ॥ ५ ॥

एषोऽपीडन्महाबाहुः कंसं च मधुसूदनः ।
अवाप्तं तपसा वीर्यं बलमोजश्च भारत ।
कैटभं चातिलोमानि निजघान जनार्दनः ॥२१
जम्बुमैरावतं चैव विरूपं च महायशाः ।
जघान भरतश्रेष्ठ शम्बरं चारिमर्दनम् ॥ २२
एष भोगवतीं गत्वा वासुकिं भरतर्षभ ।
निर्जित्य पुण्डरीकाक्षो रौक्मिणेयममोचयत् ॥२३
एवं बहूनि कर्माणि शिशुरेव जनार्दनः ।
कृतवान्पुण्डरीकाक्षः संकर्षणसहायवान् ॥ २४
एवमेषोऽसुराणां च सुराणामपि सर्वशः ।
भयाभयकरः कृष्णः सर्वलोकेश्वरः प्रभुः ॥ २५
एवमेव महाबाहुः शास्ता सर्वदुरात्मनाम् ।
कृत्वा देवार्थममितं स्वस्थानं प्राप्स्यते पुनः ॥२६
एष भोगवतीं पुण्यां रविकान्ति महायशाः ।
द्वारकामात्मसात्कृत्वा सागरं प्लावयिष्यति ॥२७
सुरासुरमनुष्येषु नाभून्न भविता क्वचित् ।
यस्तामध्यवसद्राजा नान्यत्र मधुसूदनात् ॥ २८
भ्राजमानास्तु वै सर्वे वृष्ण्यन्धकमहारथाः ।
तेजिष्ठं प्रतिपत्स्यन्ते नाकपृष्ठं गतासवः ॥ २९
एवमेव दशार्हाणां विधाय विधिना विधिम् ।
विष्णुर्नारायणः साक्षात्स्वस्थानं प्राप्स्यते ध्रुवम् ३०
अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान्प्रीतो बालः क्रीडनकैरिव ॥ ३१
नैष गर्भत्वमापेदे न योन्यामावसत्प्रभुः ।
आत्मनस्तेजसा कृष्णः सर्वेषां कुरुते गतिम् ॥३२
यथा बुद्बुद उत्थाय तत्रैव प्रविलीयते ।
चराचराणि भूतानि तथा नारायणे सदा ॥३३
न प्रमातुं महाबाहुः शक्यो भारत केशवः ।
परं हि परतस्तस्माद्विश्वरूपान्न विद्यते ॥ ३४

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

भीष्मवाक्योपरमे सहदेवेन कृष्णपूजाविरुद्धभाषिणो वधे प्रतिज्ञाते राज्ञां तूष्णींभावः ॥ १ ॥ सहदेवमूर्ध्नि पुष्पवृष्टिः । अशरीरवाणीच ॥ २ ॥ नारदेन कृष्णानर्चकस्य निन्दनम् ॥ ३ ॥ सहदेवेन सभ्यपूजनपूर्वकं कर्मसमापनम् ॥ ४ ॥ शिशुपालेन यज्ञविघाताय राज्ञां प्रोत्साहनम् ॥ ५ ॥

वैशंपायन उवाच ।
एवमुक्त्वा ततो भीष्मो विरराम महाबलः ।
व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ॥ १
केशवं केशिहन्तारमप्रमेयपराक्रमम् ।
पूज्यमानं मया यो वः कृष्णं न सहते नृपाः ॥२
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम् ।
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः ॥ ३
स एव हि मया वध्यो भविष्यति न संशयः ।
मतिमन्तश्च ये केचिदाचार्यं पितरं गुरुम् ॥ ४
अर्च्यमर्चितमर्घार्हमनुजानन्तु ते नृपाः ।
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ॥ ५
मानिनां बलिनां राज्ञां मध्ये वै दर्शिते पदे ।
ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्धनि ॥ ६
अदृश्यरूपा वाचश्चाप्यब्रुवन्साधुसाध्विति ।
अविध्यदजिनं कृष्णं भविष्यद्भूतजल्पनः ॥ ७
सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ।
उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ॥ ८
कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।
जीवन्मृतास्तु ते ज्ञेया न सभाष्याः कदाचन ॥९
वैशंपायन उवाच ।
पूजयित्वा च पूजार्हान्ब्रह्मक्षत्रविशेषवित् ।
सहदेवो नृणां देवः समापयत कर्म तत् ॥ १०
तस्मिन्नभ्यार्चिते कृष्णे सुनीथः शत्रुकर्षणः ।
अतिताम्रेक्षणः कोपादुवाच मनुजाधिपान् ॥११
स्थितः सेनापतिर्योऽहं मन्यध्वं किं तु सांप्रतम् ।
युधि तिष्ठाम सन्नह्य समेतान्वृष्णिपाण्डवान् ॥१२

इति सर्वान्समुत्साद्य राज्ञस्तांश्चेदिपुङ्गवः ।
यज्ञोपघाताय ततः सोऽमन्त्रयत राजभिः ॥ १३
तत्राहूतागताः सर्वे सुनीथप्रमुखा गणाः ।
समदृश्यन्त संक्रुद्धा विवर्णवदनास्तथा ॥ १४
युधिष्ठिराभिषेकं च वासुदेवस्य चार्हणम् ।
न स्याद्यथा तथा कार्यमेवं सर्वे तदाऽब्रुवन्॥ १५
निष्कर्षान्निश्चयात्सर्वे राजानः क्रोधमूर्छिताः ।
अब्रुवंस्तत्र राजानो निर्वेदादात्मनिश्चयात् ॥ १६
सुहृद्भिर्वार्यमाणानां तेषां हि वपुराबभौ ।
आमिषादपकृष्टानां सिंहानामिव गर्जताम् ॥१७
तं बलौघमपर्यन्तं राजसागरमक्षयम् ।
कुर्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ॥ १८

॥ इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ समाप्तं चेदमर्घाहरणपर्व ॥

---

# (अथ शिशुपालवधपर्व ॥ ६ ॥)

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

राज्ञां रणोद्यमाद्बिभ्यतो युधिष्ठिरस्य भीष्मेण समाश्वासनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः सागरसङ्काशं दृष्ट्वा नृपतिमण्डलम् ।
संवर्तवाताभिहतं भीमं क्षुब्धमिवार्णवम् ॥ १
रोषात्प्रचलितं सर्वमिदमाह युधिष्ठिरः ।
भीष्मं मतिमतां मुख्यं वृद्धं कुरुपितामहम् ।
बृहस्पतिं बृहत्तेजाः पुरुहूत इवारिहा ॥ २
असौ रोषात्प्रचलितो महान्नृपतिसागरः ।
अत्र यत्प्रतिपत्तव्यं तन्मे ब्रूहि पितामह ॥ ३
यज्ञस्य च न विघ्नः स्यात्प्रजानां च हितं भवेत् ।
यथा सर्वत्र तत्सर्वं ब्रूहि मेऽद्य पितामह॥ ४
इत्युक्तवति धर्मज्ञे धर्मराजे युधिष्ठिरे ।
उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ॥ ५
मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति ।
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ॥६
प्रसुप्ते हि यथा सिंहे श्वानस्तात समागताः ।
भषेयुः सहिताः सर्वे तथेमे वसुधाधिपाः ॥ ७
वृष्णिसिंहस्य सुप्तस्य तथाऽमी प्रमुखे स्थिताः ।
भषन्ते तात संक्रुद्धाः श्वानः सिंहस्य सन्निधौ॥८
न हि संबुध्यते यावत्सुप्तः सिंह इवाच्युतः ।
'तदिदं ज्ञातपूर्वं हि तव संस्तोतुमिच्छसि ।'
तेन सिंहीकरोत्येतानसिंहश्चेदिपुङ्गवः ॥ ९
पार्थिवान्पार्थिवश्रेष्ठ शिशुपालोऽल्पचेतनः ।
सर्वान्सर्वात्मना तात नेतुकामो यमक्षयम् ॥१०
नूनमेतत्समादातुं पुनरिच्छत्यधोक्षजः ।
यदस्य शिशुपालस्य तेजस्तिष्ठति भारत ॥ ११
विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर ।
चेदिराजस्य कौन्तेय सर्वेषां च महीक्षिताम्॥१२
आदातुं च नरव्याघ्रो यं यमिच्छत्ययं तदा ।
तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥ १३
चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ।
प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर ॥ १४
वैशंपायन उवाच ।
इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः ।
भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत॥१५

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

भषणं श्वरवः ॥ ७ ॥

त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

शिशुपालेन भीष्मस्तुतकृष्णचरित्रापहसनपूर्वकं भीष्मोपालम्भनम् ॥ १ ॥

शिशुपाल उवाच ।
बिभीषिकाभिर्बह्वीभिर्भीषयन्भीष्म पार्थिवान् ।
न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसनः ॥ १
युक्तमेतत्तृतीयायां प्रकृतौ वर्तता त्वया ।
वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः ॥ २
नावि नौरिव संबद्धा यथान्धो वान्धमन्वियात् ।
तथाभूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥ ३
पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः ।
त्वया कीर्तयताऽस्माकं भूयः प्रव्यथितं मनः ॥ ४
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥ ५
यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः ।
तमिमं ज्ञानवृद्धः सन्गोपं संस्तोतुमिच्छसि ॥ ६
यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम् ।
तौ वाऽश्ववृषभौ भीष्म यौ न युद्धविशारदौ ॥ ७
चेतनारहितं काष्ठं यद्यनेन निपातितम् ।
पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ॥ ८
'अर्कप्रमाणौ तौ वृक्षौ यद्यनेन निपातितौ ।
नागश्च दमितोऽनेन तत्र को विस्मयः कृतः ॥' ९
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः ।
तदा गोवर्धनो भीष्म न तच्चित्रं मतं मम ॥ १०
भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्धनि ।
इति ते भीष्म शृण्वानाः परे विस्मयमागताः ११
यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसः ।
स चानेन हतः कंस इत्येतत्तु महाद्भुतम् ॥ १२
न ते श्रुतमिदं भीष्म नूनं कथयतां सताम् ।
यद्वक्ष्ये त्वामधर्मज्ञं वाक्यं कुरुकुलाधम ॥ १३
स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च ।
यस्य चान्नानि भुञ्जीत यश्च स्याच्छरणं गतः ॥ १४
इति सन्तोऽनुशासन्ति सज्जना धर्मिणः सदा ।
भीष्म लोके हि तत्सर्वं वितथं त्वयि दृश्यते ॥ १५
ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम ।
अजानत इवाख्यासि संस्तुवन्कौरवाधम ॥ १६
गोघ्नः स्त्रीघ्नश्च सन्भीष्म त्वद्वाक्याद्यदि पूज्यते ।
एवंभूतश्च यो भीष्म कथं संस्तवमर्हति ॥ १७
असौ मतिमतां श्रेष्ठो य एष जगतः प्रभुः ।
संभावयति चाप्येवं त्वद्वाक्याच्च जनार्दनः ।
एवमेतत्सर्वमिति तत्सर्वं वितथं ध्रुवम् ॥ १८
आत्मानमात्मनाऽऽधातुं यदि शक्तो जनार्दनः ।
अकामयन्तं तं भीष्म कथं साध्विव पश्यसि ॥ १९
न गाथा गाथिनं शास्ति बहुचेदपि गायति ।
प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥ २०
नूनं प्रकृतिरेषा ते जघन्या नात्र संशयः ।
'नदीसुतत्वात्ते चित्तं चञ्चलं न स्थिरं स्मृतम्' २१
अतः पापीयसी चैषां पाण्डवानामपीष्यते ।
येषामर्च्यतमः कृष्णस्त्वं च येषां प्रदर्शकः ॥ २२
धर्मवांस्त्वमधर्मज्ञः सतां मार्गादवप्लुतः ।
को हि धर्मिणमात्मानं जानञ्ज्ञानविदां वरः ॥ २३
कुर्याद्यथा त्वया भीष्म कृतं धर्ममवेक्षता ।
चेत्त्वं धर्मं विजानासि यदि प्राज्ञा मतिस्तव ॥ २४
अन्यकामा हि धर्मज्ञा कन्यका प्राज्ञमानिना ।
अम्बा नामेति भद्रं ते कथं साऽपहृता त्वया ॥ २५
तां त्वयाऽपहृतां भीष्म कन्यां नैषितवान्नृपः ।
भ्राता विचित्रवीर्यस्ते सतां मार्गमनुस्मरन् ॥ २६
भार्ययोर्यस्य चान्येन मिषतः प्राज्ञमानिनः ।
तव जातान्यपत्यानि सज्जनाचरिते पथि ॥ २७
को हि धर्मोऽस्ति ते भीष्म ब्रह्मचर्यमिदं वृथा ।
यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः ॥ २८
न त्वहं तव धर्मज्ञ पश्याम्युपचयं क्वचित् ।
न हि ते सेविता वृद्धा य एवं धर्ममब्रवीः ॥ २९

तृतीयायां प्रकृतौ नपुंसकत्वे ॥ २ ॥ कुलिंगोनाम भूशायी पक्षी मासाहसमित्यनिशं वदन्नपि सिंहदंष्ट्रान्तरस्थं मांसमादत्ते स्वयं साहसमतिशयितं करोति ॥ २० ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
सर्वमेतदपत्यस्य कलां नार्हन्ति षोडशीम् ॥ ३०
व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् ।
सर्वं तदनपत्यस्य मोघं भवति निश्चयात् ॥ ३१
सोऽनपत्यश्च वृद्धश्च मिथ्याधर्मानुशासनात् ।
हंसवत्त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधम् ॥ ३२
एवं हि कथयन्त्यन्ये नरा ज्ञानविदः पुरा ।
भीष्म यत्तदहं सम्यग्वक्ष्यामि तव शृण्वतः ॥ ३३
वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवत्पुरा ।
धर्मवागन्यथावृत्तः पक्षिणः सोऽनुशास्ति च ॥ ३४
धर्मं चरत माऽधर्ममिति तस्य वचः किल ।
पक्षिणः शुश्रुवुर्भीष्म सततं धर्मवादिनः ॥ ३५
हंसस्य तु वचः श्रुत्वा मुदिताः सर्वपक्षिणः ।
ऊचुश्चैव खगा हंसं परिवार्य च सर्वशः ॥ ३६
कथयस्व भवान्सर्वं पक्षिणां तु समासतः ।
को हि नाम द्विजश्रेष्ठ ब्रूहि नो धर्म उत्तमः ॥ ३७
हंस उवाच ।
प्रजास्वहिंसा धर्मो वै हिंसाऽधर्मः खगव्रजाः ।
एतदेवानुबोद्धव्यं धर्माधर्मः समासतः ॥ ३८
शिशुपाल उवाच ।
वृद्धहंसवचः श्रुत्वा पक्षिणस्ते सुसंहिताः ।
ऊचुश्च धर्मलुब्धास्ते स्मयमाना इवाण्डजाः ॥ ३९
धर्मं यः कुरुते नित्यं लोके धीरतरोऽण्डजः ।
स यत्र गच्छेद्धर्मात्मा तन्मे ब्रूहीह तत्त्वतः ॥ ४०
हंस उवाच ।
बाला यूयं न जानीध्वं धर्मसूक्ष्मं विहङ्गमाः ।
धर्मं यः कुरुते लोके सततं शुभबुद्धिना ।
स चायुषोऽन्ते स्वं देहं त्यक्त्वा स्वर्गं स गच्छति ४१
तथाऽहमपि च त्यक्त्वा काले देहमिमं द्विजाः ।
स्वर्गलोकं गमिष्यामि इयं धर्मस्य वै गतिः ॥ ४२
एवं धर्मकथां चक्रे स हंसः पक्षिणां भृशम् ।
पक्षिणः शुश्रुवुर्भीष्म सततं धर्ममेव ते ॥ ४३
अथास्य भक्ष्यमाजह्रुः समुद्रजलचारिणः ।
अण्डजा भीष्म तस्यान्ये धर्मार्थमिति शुश्रुम ॥ ४४
ते च तस्य समभ्याशे निक्षिप्याण्डानि सर्वशः ।
समुद्राम्भस्यमोदन्त चरन्तो भीष्म पक्षिणः ॥ ४५
तेषामण्डानि सर्वेषां भक्षयामास पापकृत् ।
स हंसः संप्रमत्तानामप्रमत्तः स्वकर्मणि ॥ ४६
ततः प्रक्षीयमाणेषु तेषु तेष्वण्डजोऽपरः ।
अशङ्कत महाप्राज्ञः स कदाचिद्ददर्श ह ॥ ४७
ततः संकथयामास दृष्ट्वा हंसस्य किल्बिषम् ।
तेषां परमदुःखार्तः स पक्षी सर्वपक्षिणाम् ॥ ४८
ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समीपगाः ।
निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूद्वह ॥ ४९
एवं त्वां हंसधर्माणमपीमे वसुधाधिपाः ।
निहन्युर्भीष्म संक्रुद्धाः पक्षिणस्तं यथाण्डजम् ५०
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
भीष्म यां तां च ते सम्यक्कथयिष्यामि भारत ५१
अन्तरात्मन्यभिहते रौषि पत्ररथाशुचि ।
अण्डभक्षणकर्मैतत्तव वाचमतीयते ॥ ५२

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

कृष्णनिन्दाश्रवणेन शिशुपालजिघांसया उत्पततो भीमस्य भीष्मेण विनिवर्तनम् ॥ १ ॥

शिशुपाल उवाच ।
स मे बहुमतो राजा जरासन्धो महाबलः ।
योऽनेन युद्धं नेयेष दासोऽयमिति संयुगे ॥ १
केशवेन कृतं कर्म जरासन्धवधे तदा ।
भीमसेनार्जुनाभ्यां च कस्तत्साध्विति मन्यते ॥ २
अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना ।
दृष्टः प्रभावः कृष्णेन जरासन्धस्य भूपतेः ॥ ३
येन धर्मात्मनाऽऽत्मानं ब्रह्मण्यमभिजानता ।

प्रेषितं पाद्यमस्मै तद्दातुमग्रे दुरात्मने ॥ ४
भुज्यतामिति तेनोक्ताः कृष्णभीमधनञ्जयाः ।
जरासन्धेन कौरव्य कृष्णेन विकृतं कृतम् ॥ ५
यद्ययं जगतः कर्ता यथैनं मूर्ख मन्यसे ।
कस्मान्न ब्राह्मणं सम्यगात्मानमवगच्छति ॥ ६
इदं त्वाश्चर्यभूतं मे यदिमे पाण्डवास्त्वया ।
अपकृष्टाः सतां मार्गान्मन्यन्ते तच्च साध्विति॥७
अथवा नैतदाश्चर्यं येषां त्वमसि भारत ।
स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ॥ ८
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु ।
चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ॥९
तथा पद्मप्रतीकाशे स्वभावायतविस्तृते ।
भूयः क्रोधाभिताम्राक्षे रक्ते नेत्रे बभूवतुः॥ १०
त्रिशिखां भ्रुकुटीं चास्य ददृशुः सर्वपार्थिवाः ।
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥ ११
दन्तान्संदशतस्तस्य कोपाद्ददृशुराननम् ।
युगान्ते सर्वभूतानि कालस्येव जिघत्सतः ॥१२
उत्पतन्तं तु वेगेन जग्राहैनं मनस्विनम् ।
भीष्म एव महाबाहुर्महासेनमिवेश्वरः ॥ १३
तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत ।
गुरुणा विविधैर्वाक्यैः क्रोधः प्रशममागतः॥ १४
नातिचक्राम भीष्मस्य स हि वाक्यमरिन्दमः ।
समुद्धूतो घनापाये वेलामिव महोदधिः ॥ १५
शिशुपालस्तु संक्रुद्धे भीमसेने जनाधिप ।
नाकम्पत तदा वीरः पौरुषे स्वे व्यवस्थितः॥१६
उत्पतन्तं तु वेगेन पुनः पुनररिन्दमः ।
न स तं चिन्तयामास सिंहः क्रुद्धो मृगं यथा१७
प्रहसंश्चाब्रवीद्वाक्यं चेदिराजः प्रतापवान् ।
भीमसेनमभिक्रुद्धं दृष्ट्वा भीमपराक्रमम् ॥ १८
मुञ्चैनं भीष्म पश्यन्तु यावदेनं नराधिपाः ।
मत्प्रभावविनिर्दग्धं पतङ्गमिव वह्निना ॥ १९
ततश्चेदिपतेर्वाक्यं श्रुत्वा तत्कुरुसत्तमः ।
भीमसेनमुवाचेदं भीष्मो मतिमतां वरः ॥ २०
'नैषा चेदिपतेर्बुद्धिर्यत्त्वामाह्वयतेऽच्युतम् ।
भीमसेन महाबाहो कृष्णस्यैष विनिश्चयः ॥' २१

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

भीष्मेण शिशुपालवृत्तान्तकथनपूर्वकं स्वेन भीमनिषेधने स्वाभिप्रायाविष्करणम् ॥ १ ॥

भीष्म उवाच ।
चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः ।
रासभारावसदृशं रुराव च ननाद च ॥ १
तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ ।
वैकृतं तस्य तौ दृष्ट्वा त्यागायाकुरुतां मतिम् ॥२
ततः सभार्यं नृपतिं सामात्यं सपुरोहितम् ।
चिन्तासंमूढहृदयं वागुवाचाशरीरिणी ॥ ३
एष ते नृपते पुत्रः श्रीमाञ्जातो बलाधिकः ।
तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ॥४
न च वै तस्य मृत्युस्त्वं न कालः प्रत्युपस्थितः ।
यश्च शस्त्रेण हन्ताऽस्य स चोत्पन्नो नराधिप ॥५
संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः ।
पुत्रस्नेहाभिसन्तप्ता जननी वाक्यमब्रवीत् ॥ ६
येनेदमीरितं वाक्यं ममैतं तनयं प्रति ।
प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ॥ ७
याथातथ्येन भगवान्देवो वा यदि वेतरः ।
श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति॥८
अन्तर्भूतं ततो भूतमुवाचेदं पुनर्वचः ।
यस्योत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ ॥ ९
पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ ।

महासेनं कार्तिकेयम् ॥ १३ ॥

पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

तृतीयमेतद्बालस्य ललाटस्थं तु लोचनम् ॥ १०
निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति ।
त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम् ॥ ११
पृथिव्यां पार्थिवाः सर्वे अभ्यागच्छन्दिदृक्षवः ।
तान्पूजयित्वा संप्राप्तान्यथार्हं स महीपतिः ॥ १२
एकैकस्य नृपस्याङ्के पुत्रमारोपयत्तदा ।
एवं राजसहस्राणां पृथक्त्वेन यथाक्रमम् ॥ १३
शिशुरङ्के समारूढो न तत्प्राप निदर्शनम् ।
एतदेव तु संश्रुत्य द्वारवत्यां महाबलौ ॥ १४
ततश्चेदिपुरं प्राप्तौ सङ्कर्षणजनार्दनौ ।
यादवौ यादवीं द्रष्टुं स्वसारं तौ पितुस्तदा ॥ १५
अभिवाद्य यथान्यायं यथाश्रेष्ठं नृपं च ताम् ।
कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ ॥ १६
साऽभ्यर्च्य तौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः ।
पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात्स्वयम् ॥ १७
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ ।
पेततुस्तच्च नयनं न्यमज्जत ललाटजम् ॥ १८
तद्दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत ।
ददस्व मे वरं कृष्ण भयार्ताया महाभुज ॥ १९
त्वं ह्यार्तानां समाश्वासो भीतानामभयप्रदः ।
एवमुक्तस्ततः कृष्णः सोऽब्रवीद्यदुनन्दनः ॥ २०
मा भैस्त्वं देवि धर्मज्ञे न मत्तोऽस्ति भयं तव ।
ददामि कं वरं किं च करवाणि पितृष्वसः ॥ २१
शक्यं वा यदि वाऽशक्यं करिष्यामि वचस्तव ।
एवमुक्ता ततः कृष्णमब्रवीद्यदुनन्दनम् ॥ २२
शिशुपालस्यापराधान्क्षमेथास्त्वं महाबल ।
मत्कृते यदुशार्दूल विद्ध्येनं मे वरं प्रभो ॥ २३
कृष्ण उवाच ।
अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः ।
पुत्रस्य ते वधार्हस्य मा त्वं शोके मनः कृथाः ॥ २४
भीष्म उवाच ।
'स जानन्नात्मनो मृत्युं कृष्णं यदुसुखावहम् ।'
एवमेष नृपः पापः शिशुपालः सुमन्दधीः ।
त्वां समाह्वयते वीर गोविन्दवरदर्पितः ॥ २५

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

शिशुपालेन राज्ञां प्रशंसनपूर्वकं गर्हितेन भीष्मेण राज्ञां तिरस्करणादिकम् ॥ १ ॥

भीष्म उवाच ।
नैषा चेदिपतेर्बुद्धिर्यया त्वाह्वयतेऽच्युतम् ।
नूनमेष जगद्भर्तुः कृष्णस्यैव विनिश्चयः ॥ १
को हि मां भीमसेनाद्य क्षितावर्हति पार्थिवः ।
क्षेप्तुं कालपरीतात्मा यथैष कुलपांसनः ॥ २
एष ह्यस्य महाबाहुस्तेजोंशश्च हरेर्ध्रुवम् ।
तमेव पुनरादातुं कुरुतेऽत्र मतिं हरिः ॥ ३
येनैष कुरुशार्दूल शार्दूल इव चेदिराट् ।
गर्जत्यतीव दुर्बुद्धिः सर्वानस्मानचिन्तयन् ॥ ४
वैशंपायन उवाच ।
ततो न ममृषे चैद्यस्तद्भीष्मवचनं तदा ।
उवाच चैनं संक्रुद्धः पुनर्भीष्ममथोत्तरम् ॥ ५
शिशुपाल उवाच ।
द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः ।
यस्य संस्तववक्ता त्वं बन्दिवत्सततोत्थितः ॥ ६
संस्तवे च मनो भीष्म परेषां रमते यदि ।
तदा संस्तुहि राज्ञस्त्वमिमं हित्वा जनार्दनम् ॥ ७
दरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमम् ।
जायमानेन येनेयमभवद्दारिता मही ॥ ८
वङ्गाङ्गविषयाध्यक्षं सहस्राक्षसमं बले ।
स्तुहि कर्णमिमं भीष्म महाचापविकर्षणम् ॥ ९
यस्येमे कुण्डले दिव्ये सहजे देवनिर्मिते ।
कवचं च महाबाहो बालार्कसदृशप्रभम् ॥ १०
वासवप्रतिमो येन जरासन्धोऽतिदुर्जयः ।

विजितो बाहुयुद्धेन देहभेदं च लम्भितः ॥ ११
द्रोणं द्रौणिं च साधु त्वं पितापुत्रौ महारथौ ।
स्तुहि स्तुत्यावुभौ भीष्म सततं द्विजसत्तमौ॥१२
ययोरन्यतरो भीष्म संक्रुद्धः सचराचराम् ।
इमां वसुमतीं कुर्यान्निःशेषामिति मे मतिः॥१३
द्रोणस्य हि समं युद्धे न पश्यामि नराधिपम् ।
नाश्वत्थाम्नः समं भीष्म न च तौ स्तोतुमिच्छसि१४
पृथिव्यां सागरान्तायां यो वैप्रतिसमो भवेत् ।
दुर्योधनं त्वं राजेन्द्रमतिक्रम्य महाभुजम् ॥ १५
जयद्रथं च राजानं कृतास्त्रं दृढविक्रमम् ।
द्रुमं किंपुरुषाचार्यं लोके प्रथितविक्रमम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥१६
वृद्धं च भरताचार्यं तथा शारद्वतं कृपम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥१७
धनुर्धराणां प्रवरं रुक्मिणं पुरुषोत्तमम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥१८
भीष्मकं च महावीर्यं दन्तवक्रं च भूमिपम् ।
भगदत्तं यूपकेतुं जयत्सेनं च मागधम् ॥ १९
विराटद्रुपदौ चोभौ शकुनिं च बृहद्बलम् ।
विन्दानुविन्दावावन्त्यौ पाण्ड्यं श्वेतमथोत्तमम् ॥
शङ्खं च सुमहाभागं वृषसेनं च मानिनम् ।
एकलव्यं च विक्रान्तं कालिङ्गं च महारथम्॥२१
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ।
शल्यादीनपि कस्मात्त्वं न स्तौषि वसुधाधिपान् ।
स्तवाय यदि ते बुद्धिर्वर्तते भीष्म सर्वदा ॥ २२
किं हि शक्यं मया कर्तुं यद्वृद्धानां त्वया नृप ।
पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम् ॥ २३
आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणामिति ते भीष्म न श्रुतम्॥२४
यदस्तव्यमिमं शश्वन्मोहात्संस्तौषि भक्तितः ।
केशवं तच्च ते भीष्म न कश्चिदनुमन्यते ॥ २५
कथं भोजस्य पुरुषे वत्सपाले दुरात्मनि ।
समावेशयसे सर्वं जगत्केवलकाम्यया ॥ २६
अथ चैषा न ते बुद्धिः प्रकृतिं याति भारत ।
मयैव कथितं पूर्वं कुलिङ्गशकुनिर्यथा ॥ २७
कुलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे ।
भीष्म तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः२८
मा साहसमितीदं सा सततं वाशते किल ।
साहसं चात्मनातीव चरन्ती नावबुध्यते ॥ २९
सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः ।
दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना ॥ ३०
इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम् ।
तद्वत्त्वमप्यधर्मिष्ठ सदा वाचः प्रभाषसे ॥ ३१
इच्छतां भूमिपालानां भीष्म जीवस्यसंशयम् ।
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः३२

वैशंपायन उवाच ।

ततश्चेदिपतेः श्रुत्वा भीष्मः स कटुकं वचः ।
उवाचेदं वचो राजंश्चेदिराजस्य शृण्वतः ॥ ३३
इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम् ।
सोऽहं न गणयाम्येतांस्तृणेनापि नराधिपान् ३४
एवमुक्ते तु भीष्मेण ततः संचुक्रुशुर्नृपाः ।
केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे ॥ ३५
केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद्वचः ।
पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमां ३६
हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वयं नृपाः ।
सर्वैः समेत्य संरब्धैर्दह्यतां वा कटाग्निना ॥ ३७
इति तेषां वचः श्रुत्वा ततः कुरुपितामहः ।
उवाच मतिमान्भीष्मस्तानेव वसुधाधिपान्॥३८
उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।
यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपाः॥३९
पशुवद्घातनं वा मे दहनं वा कटाग्निना ।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम्॥४०
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः ।
यस्य वस्त्वरते बुद्धिर्मरणाय स माधवम् ॥ ४१

---

वैप्रतिसमः विगतः प्रतिसमो यस्य स तथा । स्वार्थे तद्धितः । अतुल इत्यर्थः ॥ १५ ॥ कुलिङ्गशकुनिरिति स्त्रीपक्षिविशेषः ॥ २७ ॥ कटाग्निना कक्षाग्निना ॥ ३७ ॥ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् । यादवस्यैव देवस्य देहं विशतु पातितः ॥ ४२

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

भीष्मवाक्यात्कुपितेन शिशुपालेन राज्ञः सन्नाह्य युयुत्सया कृष्णस्याह्वानम् ॥ १ ॥ कृष्णेन स्वस्मिन् शिशुपालकृतापराधान्विश्राव्य विभीषितानां राज्ञां पलायनम् ॥ २ ॥ अपगतेषु राजसु शिशुपालस्य एकाकिनः कृष्णं प्रति युद्धाय गमनम् ॥ ३ ॥

वैशंपायन उवाच ।
वचः श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः ।
युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह ॥ १
आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥ २
सह त्वया हि मे वध्याः सर्वथा कृष्ण पाण्डवाः ।
नृपतीन्समतिक्रम्य यैरराजा त्वमर्चितः ॥ ३
ये त्वां दासमराजानं बाल्यादर्चन्ति दुर्मतिम् ।
अनर्हमर्हवत्कृष्ण वध्यास्त इति मे मतिः ॥ ४
इत्युक्त्वा राजशार्दूल 'शार्दूल इव नादयन् ।
पश्यतां सर्वभूतानां शिशुपालः प्रतापवान् ॥ ५
स रणायैव संक्रुद्धः सन्नद्धः सर्वराजभिः ।
सुनीथः प्रययौ क्षिप्रं पार्थयज्ञजिघांसया ॥ ६
ततश्चक्रगदापाणिः केशवः केशिहा हरिः ।
सध्वजं रथमास्थाय दारुकेण सुसत्कृतम् ।
भीष्मेण दत्तहस्तोऽसावारुरोह रथोत्तमम् ॥ ७
तेन पापस्वभावेन कोपितान्सर्वपार्थिवान् ।
आससाद रणे कृष्णः सज्जितैकरथः स्थितः ॥ ८
ततः पुष्करपत्राक्षं तार्क्ष्यध्वजरथे स्थितम् ।
दिवाकरमिवोद्यन्तं ददृशुः सर्वपार्थिवाः ॥ ९
आरोपयन्तं ज्यां कृष्णं प्रतपन्तमिवौजसा ।
स्थितं पुष्परथे दिव्ये पुष्पकेतुमिवापरम् ॥ १०
दृष्ट्वा कृष्णं तथा यान्तं प्रतपन्तमिवौजसा ।
यथार्हं केशवे वृत्तिमवशाः प्रतिपेदिरे ॥ ११
तानुवाच महाबाहुर्महाऽसुरनिबर्हणः ।
धृष्णिवीरस्तदा राजन्सान्त्वयन्परवीरहा ॥ १२

श्रीभगवानुवाच ।
अपेत सबलाः सर्वे आश्वस्ता मम शासनात् ।
मा दुष्टो दूषयेत्पाप एष वः सर्वपार्थिपाः ॥ १३
एष नः शत्रुरत्यन्तमेष वृष्णिविमर्दनः ।
सात्वतां सात्वतीपुत्रो वैरं चरति शाश्वतम् ॥'१४
प्राग्ज्योतिषपुरं यातानस्माञ्ज्ञात्वा नृशंसकृत् ।
अदहद्द्वारकामेष स्वस्रीयः सन्नराधिपाः ॥ १५
क्रीडतो भोजराजस्य एष रैवतके गिरौ ।
हत्वा बध्वा च तान्सर्वानुपायात्स्वपुरं पुरा ॥ १६
अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम् ।
पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चयः ॥ १७
सौवीरान्प्रतियातां च बभ्रोरेष तपस्विनः ।
भार्यामभ्यहरन्मोहादकामां तामितो गताम् ॥ १८
एष मायाप्रतिच्छन्नः कारूशार्थे तपस्विनीम् ।
जहार भद्रां वैशालीं मातुलस्य नृशंसकृत् ॥ १९
वृष्णिदारान्विलाप्यैष हत्वा च कुकुरान्धकान् ।
पापबुद्धिरुपातिष्ठत्तस प्रविश्य ससंभ्रमम् ॥ २०
विशालराज्ञो दुहितां मम पित्रा वृतां सतीम् ।
अनेन कृत्वा सन्धानं करूशेन जिगीषया ॥ २१
जरासन्धं समाश्रित्य कृतवान्विप्रियाणि मे ।
तानि सर्वाणि सङ्ख्यातुं न शक्नोमि नराधिपाः २२
एवमेतदपर्यन्तमेष वृष्णिषु किल्बिषी ।
अस्माकमयमारम्भांश्चकार परमानृजुः ॥ २३
शतं क्षन्तव्यमस्माभिर्वधार्हाणां किलागसाम् ।
बद्धोऽस्मि समयैर्घोरैर्मातुरस्यैव सङ्गरे ॥ २४
तत्तथा शतमस्माकं क्षान्तं क्षयकरं मया ।

---

स च भीष्मो हि मे वध्यः पाण्डवाः कृष्ण सर्वशः ॥ ३ ॥

द्वौ तु मे वधकालेऽस्मिन्न क्षन्तव्यौ कथञ्चन॥२५
यज्ञविघ्नकरं हन्यां पाण्डवानां च दुर्हृदम् ।
इति मे वर्तते भावस्तमतीयां कथं न्वहम् ॥ २६
पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम् ।
दिष्ट्या हीदं सर्वराज्ञां सन्निधावद्य वर्तते ॥ २७
पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम् ।
कृतानि तु परोक्षं मे यानि तानि निबोधत॥२८
इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम् ।
अवलेपाद्वधार्हस्य समग्रे राजमण्डले ॥ २९
रुक्मिण्यामस्य मूढस्य प्रार्थनाऽऽसीन्मुमूर्षतः ।
न च तां प्राप्तवान्मूढः शूद्रो वेदश्रुतीमिव ॥३०
वैशंपायन उवाच ।
एवमादि ततः सर्वे सहितास्ते नराधिपाः ।
गर्हणं शिशुपालस्य वासुदेवेन विश्रुताः ॥ ३१
वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन् ।
रथोपस्थे धनुष्मन्तं शरान्संदधतं रुषा ॥ ३२
श्रुत्वाऽपि च विलोक्याशु दुद्रुवुः सर्वपार्थिवाः ।
विहाय परमोद्विग्नाश्चेदिराजं चमूमुखे ॥ ३३
तस्य तद्वचनं श्रुत्वा शिशुपालः प्रतापवान् ।
जहास स्वनवद्धासं वाक्यं चेदमुवाच ह ॥ ३४
मत्पूर्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्तयन् ।
विशेषतः पार्थिवेषु व्रीडां न कुरुषे कथम् ॥ ३५
मन्यमानो हि कः सत्सु पुरुषः परिकीर्तयेत् ।
अन्यपूर्वां स्त्रियं जातु त्वदन्यो मधुसूदन ॥ ३६
क्षमा वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम ।
क्रुद्धाद्वापि प्रसन्नाद्वा किं मे त्वत्तो भविष्यति३७
'वैशंपायन उवाच ।
स तांस्तु विद्रुतान्सर्वान्साश्वपत्तिरथद्विपान् ।
कृष्णतेजोहतान्सर्वान्समीक्ष्य वसुधाधिपान्॥३८
शिशुपालो रथेनैकः प्रत्युपायात्स केशवम् ।
रुषा ताम्रेक्षणो राजञ्छलभः पावकं यथा ॥३९

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

शिशुपाले संनद्धे सति उत्पातदर्शनेन युधिष्ठिरस्य प्रश्ने नारदेन तत्तदुत्पातानां विशिष्य फलकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो युद्धाय संनद्धं चेदिराजं युधिष्ठिरः ।
दृष्ट्वा मतिमतां श्रेष्ठो नारदं समुवाच ह ॥ १
युधिष्ठिर उवाच ।
अन्तरिक्षे च भूमौ च न तेऽस्त्यविदितं क्वचित् ।
यानि राजविनाशाय भौमानि च खगानि च॥२
निमित्तानीह जायन्ते उत्पाताश्च पृथग्विधाः ।
एतदिच्छामि कात्स्न्र्येन श्रोतुं त्वत्तो महामुने॥३
वैशंपायन उवाच ।
इत्येवं मतिमान्विप्रः कुरुराजस्य धीमतः ।
पृच्छतः सर्वमव्यग्रमाचचक्षे महायशाः ॥ ४
नारद उवाच ।
पराक्रमं च मार्गं च संनिपातं समुच्छ्रयम् ।
आरोहणं कुरुश्रेष्ठ अन्योन्यं प्रतिसर्पणम् ॥ ५
रश्मीनां व्यतिसंसर्गं व्यायामं वृत्तिपीडनम् ।
दर्शनादर्शनं चैव अदृश्यानां च दर्शनम् ॥ ६
हानिं वृद्धिं च ह्रासं च वर्णस्थानं बलाबलम् ।
सर्वमेतत्परीक्षेत ग्रहाणां ग्रहकोविदः ॥ ७
भौमाः पूर्वं प्रवर्तन्ते खेचराश्च ततः परम् ।
उत्पद्यन्ते च लोकेऽस्मिन्नुत्पाता देवनिर्मिताः॥८
यदा तु सर्वभूतानां छाया न परिवर्तते ।
अपरेण गते सूर्ये तत्पराभवलक्षणम् ॥ ९
अच्छाये विमलच्छाया प्रतिच्छायेव दृश्यते ।
यत्र चैत्यकवृक्षाणां तत्र विद्यान्महद्भयम् ॥ १०
शीर्णपर्णप्रवालाश्च शुष्कपर्णाश्च चैत्यकाः ।
अपभ्रष्टप्रवालाश्च तत्राभावं विनिर्दिशेत् ॥ ११
स्निग्धपर्णप्रवालाश्च दृश्यन्ते यत्र चैत्यकाः ।

विश्रुताः श्राविताः ॥ ३१ ॥ अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

ईहमानाश्च वृक्षाश्च भावस्तत्र न संशयः ॥ १२
पुष्पे पुष्पं प्रजायेत फले वा फलमाश्रितम् ।
राजा वा राजमात्रो वा मरणायोपपद्यते ॥ १३
प्रावृट्छरदि हेमन्ते वसन्ते वापि सर्वशः ।
आकालिकं पुष्पफलं राष्ट्रक्षोभं विनिर्दिशेत् ॥१४
नदीनां स्रोतसोऽकाले द्योतयन्ति महाभयम् ।
वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा १५
यदा भज्येत वातेन भिद्यते नमितोऽपि वा ।
अग्निवायुभयं विद्याच्छ्रेष्ठो वापि विनश्यति ॥१६
दिशः सर्वाश्च दीप्यन्ते जायन्ते राजविभ्रमाः ।
भिद्यमानो यदा वृक्षो निनदेच्चापि पातितः ।
सह राष्ट्रं च पतितं नतं वृक्षं प्रपातयेत् ॥ १७
अथैनं छेदयेत्कश्चित्प्रतिक्रुद्धो वनस्पतिः ।
छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव नशिष्यति ॥ १८
देवतानां च पतनं मण्टपानां च पातनम् ।
अचलानां प्रकम्पश्च तत्पराभवलक्षणम् ॥ १९
निशि चेन्द्रधनुर्दृष्टं ततोपि च महद्भयम् ।
तद्द्रष्टुरेव भीतिः स्यान्नान्येषां भरतर्षभ ॥ २०
रात्राविन्द्रधनुर्दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ॥ २१
अर्चा यत्र प्रनृत्यन्ति नदन्ति च हसन्ति च ।
उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत् २२
शिला यदि प्रसिञ्चन्ति स्नेहांश्चोदकसंभवान् ।
अन्यद्वा विकृतं किञ्चित्तद्भयस्य निदर्शनम् ॥२३
म्रियन्ते वा महामात्रा राजा सपरिवारकः ।
पुरस्य वा भवेद्व्याधी राष्ट्रे देशे च विभ्रमाः ॥२४
देवतानां यदाऽऽवासे राज्ञां वा यत्र वेश्मनि ।
भाण्डागारायुधागारे निविशेत यदा मधु ॥ २५
सर्वं तदा भवेत्स्थानं हन्यमानं बलीयसा ।
आगन्तुकं भयं तत्र भवेदित्येव निर्दिशेत् ॥ २६
पादपश्चैव यो यत्र रक्तं स्रवति शोणितम् ।
दन्ताग्रात्कुञ्जरो वापि शृङ्गाद्वा वृषभस्तथा ॥२७
पादपाद्राष्ट्रविभ्रंशः कुञ्जराद्राजविभ्रमः ।
गोब्राह्मणविनाशः स्याद्वृषभस्येति निर्दिशेत् ॥२८
छत्रं नरपतेर्यत्र निपतेत्पृथिवीतले ।
सराष्ट्रो नृपती राजन्क्षिप्रमेव विनश्यति ॥ २९
देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि ।
विकृतं यदि दृश्येत नागावासेषु वा पुनः ॥३०
तस्य देशस्य पीडा स्याद्राज्ञो जनपदस्य वा ।
अनावृष्टिभयं घोरमतिदुर्भिक्षमादिशेत् ॥ ३१
अर्चाया बाहुभङ्गेन गृहस्थानां भयं भवेत् ।
भग्ने प्रहरणे विद्यात्सेनापतिविनाशनम् ॥ ३२
आगन्तुका तु प्रतिमा स्थानं यत्र न विन्दति ।
अभ्यन्तरेण षण्मासाद्राजा त्यजति तत्पुरम् ॥३३
प्रदीर्यते मही यत्र विनदत्यपि पात्यते ।
म्रियते तत्र राजा च तत्र राष्ट्रं विनश्यति ॥३४
एणीपदान्वा सर्पान्वा डुण्डुभानथ दीप्यकान् ।
मण्डूको ग्रसते यत्र तत्र राजा विनश्यति ॥ ३५
अभिन्नं वाप्यपक्कं वा यत्रान्नमुपचीयते ।
जीर्यन्ते वा म्रियन्ते वा तदन्नं नोपभुञ्जते ॥३६
उदपाने च यत्रापो विवर्धन्ते युधिष्ठिर ।
स्थावरेषु प्रवर्तन्ते निर्गच्छेच्च पुनस्ततः ॥ ३७
अपादं वा त्रिपादं वा द्विशीर्षं वा चतुर्भुजम् ।
स्त्रियो यत्र प्रसूयन्ते ब्रूयात्तत्र पराभवम् ॥ ३८
अजैडकाः स्त्रियो गावो ये चान्ये च वियोनयः ।
विकृतानि प्रजायन्ते तत्र तत्र पराभवः ॥ ३९
नदी यत्र प्रतिस्रोता आवहेत्कलुषोदकम् ।
दिशश्च न प्रकाशन्ते तत्पराभवलक्षणम् ॥ ४०
एतानि च निमित्तानि यानि चान्यानि भारत ।
केशवादेव जायन्ते भौमानि च खगानि च ॥४१
चन्द्रादित्यौ ग्रहाश्चैव नक्षत्राणि च भारत ।
वायुरग्निस्तथा चापः पृथिवी च जनार्दनात् ॥४२
यस्य देशस्य हानिं वा वृद्धिं वा कर्तुमिच्छति ।
तस्मिन्देशे निमित्तानि तानि तानि करोत्ययम् ४३
सोसौ चेदिपतेस्तात विनाशं समुपस्थितम् ।
निवेदयति गोविन्दः स्वैरुपायैर्न संशयः ॥ ४४
इयं प्रचलिता भूमिरशिवा वान्ति मारुताः ।
राहुश्चाप्यपतत्सोममपर्वणि विशांपते ॥ ४५
सनिर्घाताः पतन्त्युल्कास्तमः संजायते भृशम् ।

चेदिराजविनाशाय हरिरेष विजृम्भते ॥ ४६
वैशंपायन उवाच ।
एवमुक्त्वा तु देवर्षिर्नारदो विरराम ह ॥ ४७
ताभ्यां पुरुषसिंहाभ्यां तस्मिन्युद्ध उपस्थिते ।
ददृशुर्भूमिपालास्ते घोरानौत्पातिकान्बहून् ॥४८
तत्र वै दृश्यमानानां दिक्षु सर्वासु भारत ।
अश्रूयन्त तदा राजञ्छिवानामशिवा रवाः ॥४९
ररास च मही कृत्स्ना सवृक्षवनपर्वता ।
अपर्वणि च मध्याह्ने सूर्यं स्वर्भानुरग्रसत् ॥ ५०
ध्वजाग्रे चेदिराजस्य सर्वरत्नपरिष्कृते ।
अपतत्खाच्च्युतो गृध्रस्तीक्ष्णतुण्डः परन्तप ॥५१
आरण्यैः सहसा हृष्टा ग्राम्याश्च मृगपक्षिणः ।
चुक्रुशुर्भैरवं तत्र तस्मिन्युद्ध उपस्थिते ॥ ५२
एवमादीनि घोराणि भौमानि च खगानि च ।
औत्पातिकान्यदृश्यन्त संक्रुद्धे शार्ङ्गधन्वनि ॥५३

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

## सप्ततितमोऽध्यायः ॥ ७० ॥

कृष्णशिशुपालयोर्युद्धवर्णनम् ॥ १ ॥ शिशुपालवधः ॥ २ ॥

वैशंपायन उवाच ।
ततो विष्फारयन्राजा महच्चेदिपतिर्धनुः ।
अभियास्यन्हृषीकेशमुवाच मधुसूदनम् ॥ १
एकस्त्वमसि मे शत्रुस्त्वां हत्वाऽद्य माधव ।
ततः सागरपर्यन्तां पालयिष्यामि मेदिनीम् ॥२
द्वैरथं काङ्क्षितं यद्वै तदिदं पर्युपस्थितम् ।
चिरस्य बत मे दिष्ट्या वासुदेव सह त्वया ।
अद्य त्वां निहनिष्यामि भीष्मं च सह पाण्डवैः ३
वैशंपायन उवाच ।
एवमुक्त्वा स तं बाणैर्निशितैरात्ततेजनैः ।
विव्याध युधि तीक्ष्णाग्रैश्चेदिराड्यदुपुङ्गवम् ॥ ४
कङ्कपत्रच्छदा बाणाश्चेदिराजधनुश्च्युताः ।
विविशुस्ते तदा कृष्णं भुजङ्गा इव पर्वतम् ॥ ५
नाददानस्य चैद्यस्य शरानस्यस्ततोपि वा ।
ददृशुर्विवरं केचिद्गतिं वायोरिवाम्बरे ॥ ६
स्त्वेदिराजमहामेघः शरजालाम्बुमांस्तदा ।
अभ्यवर्षद्धृषीकेशं पयोद इव पर्वतम् ॥ ७
ततः शार्ङ्गममित्रघ्नः कृत्वा सशरमच्युतः ।
आबभाषे महाबाहुः सुनीथं परवीरहा ॥ ८
अयं त्वां मामकस्तीक्ष्णश्चेदिराज महाशरः ।
भेत्तुमर्हति वेगेन महाशनिरिवाचलम् ॥ ९
वैशंपायन उवाच ।
एवं ब्रुवति गोविन्दे ततश्चेदिपतिः पुनः ।
मुमोच निशितानन्यान्कृष्णं प्रति शरान्बहून् १०
अथ बाणार्दितः कृष्णः शार्ङ्गमायम्य दीप्तिमान् ।
मुमोच निशितान्बाणाञ्छतशोथ सहस्रशः ॥११
ताञ्छरांस्तु स चिच्छेद शरवर्षैस्तु चेदिराट् ।
षड्भिश्चान्यैर्जघानाशु केशवं चेदिपुङ्गवः ॥ १२
ततोऽस्त्रं सहसा कृष्णः प्रमुमोच जगद्गुरुः ।
अस्त्रेण तन्महाबाहुर्वारयामास चेदिराट् ॥ १३
ततः शतसहस्रेण शराणां नतपर्वणाम् ।
सर्वतः समवाकीर्य शौरिं दामोदरं तदा ॥ १४
ननाद बलवान्क्रुद्धः शिशुपालः प्रतापवान् ।
इदं चोवाच संरब्धः केशवं परवीरहा ॥ १५
शिशुपाल उवाच ।
अद्याङ्ग मामका बाणा भेत्स्यन्ति तव संयुगे ।
हत्वा त्वां ससुतामात्यं पाण्डवांश्च तरस्विनः १६
आनृण्यमद्य यास्यामि जरासन्धस्य धीमतः ।
कंसस्य केशिनश्चैव नरकस्य तथैव ह ॥ १७
वैशंपायन उवाच ।
इत्युक्त्वा क्रोधताम्राक्षः शिशुपालो जनार्दनम् ।
अदृश्यं शरवर्षेण सर्वतः स चकार ह ॥ १८

ततोऽस्त्रेणैव चान्योन्यं निकृत्य च शरान्बहून् ।
शरवर्षैस्तदा चैद्यमन्तर्धातुं प्रचक्रमे ॥ १९
अन्तर्धानगतौ वीरौ शुशुभाते महारथौ ।
तौ दृष्ट्वा सर्वभूतानि साधुसाध्वित्यपूजयन्॥२०
न दृष्टपूर्वमस्माभिर्युद्धमीदृशकं पुरा ।
ततः कृष्णं जघानाशु शिशुपालस्त्रिभिः शरैः २१
कृष्णोऽपि बाणैर्विव्याध सुनीथं पञ्चभिर्युधि ।
ततः सुनीथं सप्तत्या नाराचैरर्दयद्बली ॥ २२
ततोऽतिविद्धः कृष्णेन सुनीथः क्रोधमूर्छितः ।
विव्याध निशितैर्बाणैर्वासुदेवं स्तनान्तरे ॥ २३
पुनः कृष्णं त्रिभिर्विद्ध्वा ननादावसरे नृपः ।
ततोऽतिदारुणं युद्धं सहसा चक्रतुस्तदा ॥ २४
तौ नखैरिव शार्दूलौ दन्तैरिव महागजौ ।
दंष्ट्राभिरिव पञ्चास्यौ चरणैरिव कुक्कुटौ ॥ २५
दारयेतां शरैस्तीक्ष्णैरन्योन्यं युधि तावुभौ ।
ततो मुमुचतुः क्रुद्धौ शरवर्षमनुत्तमम् ॥ २६
शरैरेव शरांश्छित्वा तावुभौ पुरुषर्षभौ ।
चक्राते ऽस्त्रमयं युद्धं घोरं तदतिमानुषम् ॥ २७
आग्नेयमस्त्रं मुमुचे शिशुपालः प्रतापवान् ।
वारुणास्त्रेण तच्छीघ्रं नाशयामास केशवः ॥ २८
कौबेरमस्त्रं सहसा चेदिराट् प्रमुमोच ह ।
कौबेरेणैव सहसाऽनाशयत्तं जगत्प्रभुः ॥ २९
याम्यमस्त्रं ततः क्रुद्धो मुमुचे कालमोहितः ।
याम्येनैवास्त्रयोगेन याम्यमस्त्रं व्यनाशयत् ॥३०
गान्धर्वेण च गान्धर्वं मानवं मानवेन च ।
वायव्येन च वायव्यं रौद्रं रौद्रेण चाभिभूः॥३१
ऐन्द्रमैन्द्रेण भगवान्वैष्णवेन च वैष्णवम् ।
एवमस्त्राणि कुर्वाणौ युयुधाते महाबलौ ॥ ३२
ततो मायां विकुर्वाणो दमघोषसुतो बली ।
गदामुसलसंयुक्ताञ्छक्तितोमरसायकान् ॥ ३३
परश्वथमुसण्डीश्च ववर्ष युधि केशवम् ।
अमोघास्त्रेण भगवान्नाशयामास केशिहा ॥ ३४
शिलावर्षं महाघोरं ववर्ष युधि चेदिराट् ।
वज्रास्त्रेणाभिसंक्रुद्धश्चूर्णं तदकरोत्प्रभुः ॥ ३५
जलवर्षं ततो घोरं व्यसृजच्चेदिपुङ्गवः ।
वायव्यास्त्रेण भगवान्व्याक्षिपच्छतशो हि तत्॥३६
निहत्य सर्वमायां वै सुनीथस्य जनार्दनः ।
स मुहूर्तं चकाराशु द्वन्द्वयुद्धं महारथः ॥ ३७
स बाणयुद्धं कुर्वाणो भर्त्सयामास चेदिराट् ।
दमघोषसुतो धृष्टमुवाच यदुपुङ्गवम् ॥ ३८
अद्य कृष्णमकृष्णं तु कुर्वन्तु मम सायकाः ।
इत्येवमुक्त्वा दुष्टात्मा शरवर्षं जनार्दने ॥ ३९
मुमोच पुरुषव्याघ्रो घोरं वै चेदिपुङ्गवः ।
शरसंकृत्तगात्रस्तु क्षणेन यदुनन्दनः ॥ ४०
रुधिरं परिसुस्राव मदं मत्त इव द्विपः ।
न यन्ता न रथो वापि न चाश्वाः पर्वतोपमाः४१
दृश्यन्ते शरसंछन्नाः केशवस्य महात्मनः ।
केशवं तदवस्थं तु दृष्ट्वा भूतानि चुक्रुशुः ॥ ४२
दारुकस्तु तदा प्राह कृष्णं यादवनन्दनम् ।
नेदृशो दृष्टपूर्वो हि सङ्ग्रामो वै पुरा मया ॥ ४३
स्थातव्यमिति तिष्ठामि त्वत्प्रभावेण माधव ।
अन्यथा न च मे प्राणा धारयेयुर्जनार्दन ॥ ४४
अतः सञ्चिन्त्य गोविन्द क्षिप्रमस्य वधं कुरु ।
एवमुक्तस्तु सूतेन केशवो वाक्यमब्रवीत् ॥ ४५
एष ह्यतिबलो दैत्यो हिरण्यकशिपुः पुरा ।
रिपुः सुराणामभवद्वरदानेन गर्वितः ॥ ४६
तथाऽऽसीद्रावणो नाम राक्षसो ह्यतिवीर्यवान् ।
तेनैव बलवीर्येण बलं नागणयन्मम ॥ ४७
अहं मृत्युश्च भविता काले काले दुरात्मनः ।
न भेतव्यं तथा सूत नैष कश्चिन्मयि स्थिते॥४८
इत्येवमुक्त्वा भगवान्ननर्द गरुडध्वजः ।
पाञ्चजन्यं महाशङ्खं पूरयामास केशवः ॥ ४९
संमोहयित्वा भगवांश्चक्रं दिव्यं समाददे ।
चिच्छेद च सुनीथस्य शिरश्चक्रेण संयुगे ॥' ५०
स पपात महाबाहुर्वज्राहत इवाचलः ।
ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः ॥ ५१
उत्पतन्तं महाराज गगनादिव भास्करम् ।
ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ।

ववन्दे तत्तदा तेजो विवेश च नराधिप ॥ ५२
तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः ।
यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमम् ॥ ५३
अनभ्रे प्रववर्ष द्यौः पपात ज्वलिताशनिः ।
कृष्णेन निहते चैद्ये चचाल च वसुन्धरा ॥ ५४
ततः केचिन्महीपाला नाब्रुवंस्तत्र किंचन ।
अतीतवाक्पथे काले प्रेक्षमाणा जनार्दनम् ॥ ५५
हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नमर्षिताः ।
अपरे दशनैरोष्ठानदशन्क्रोधमूर्छिताः ॥ ५६
रहश्च केचिद्वार्ष्णेयं प्रशशंसुर्नराधिपाः ।
केचिदेव सुसंरब्धा मध्यस्थास्त्वपरेऽभवन् ॥ ५७
प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः ।
ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः ।
शशंसुर्निर्वृताः सर्वे दृष्ट्वा कृष्णस्य विक्रमम् ॥ ५८
'सदेवगन्धर्वगणा राजानो भुवि विश्रुताः ।
प्रणामं हि हृषीकेशे प्राकुर्वत महात्मनि ॥ ५९
ये त्वासुरगणाः पक्षाः संभूताः क्षत्रिया इह ।
ते निन्दन्ति हृषीकेशं दुरात्मानो गतायुषः ॥ ६०
प्रजापतिगणा ये तु मध्यस्थाश्च महात्मनि ।
ब्रह्मर्षयश्च सिद्धाश्च गन्धर्वोरगचारणाः ॥ ६१
ते वै स्तुवन्ति गोविन्दं दिव्यैर्मङ्गलसंयुतैः ।
परस्परं च नृत्यन्ति गीतेन विविधेन च ।
उपतिष्ठन्ति गोविन्दं प्रीतियुक्ता महात्मनि ॥ ६२
प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः ।
ब्राह्मणाश्चापि सुप्रीताः पाण्डवाश्च महाबलाः ६३
पाण्डवस्त्वब्रवीद्भ्रातॄन्सत्कारेण महीपतिम् ।
दमघोषात्मजं शूरं संस्कारयत मा चिरम् ॥ ६४
कुरुराजवचः श्रुत्वा भ्रातरस्ते त्वरान्विताः ।
तथा च कृतवन्तस्ते भ्रातुर्वै शासनं तदा ॥ ६५
चेदीनामाधिपत्ये च पुत्रं तस्याज्ञया हरेः ।
अभ्यषिञ्चत तं पार्थः सहितैर्वसुधाधिपैः ॥ ६६

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

---

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

विस्तरेण राजसूयवर्णनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः प्रववृते यज्ञो धर्मराजस्य धीमतः ।
शान्तविघ्नार्हणक्षोभो महर्षिगणसङ्कुलः ॥ १
तं तु यज्ञं महाबाहुरासमाप्तेर्जनार्दनः ।
ररक्ष भगवाञ्छौरिः शार्ङ्गचक्रगदाधरः ॥ २
तस्मिन्यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः ।
हेतुवादान्बहून्प्राहुः परपक्षजिगीषवः ॥ ३
ददृशुस्ते नृपतयो यज्ञस्य विधिमुत्तमम् ।
उपेन्द्रस्येव विहितं सहदेवेन भारत ॥ ४
तद्यज्ञे न्यवसन्राजन्ब्राह्मणा भृशमुत्सुकाः ।
कथयन्तः कथाः पुण्याः पश्यन्तो नटनर्तकान् ॥ ५
ददृशुस्तोरणान्यत्र हेमतालमयानि च ।
दीप्तभास्करतुल्यानि प्रदीप्तानीव तेजसा ॥ ६
स यज्ञस्तोरणैस्तत्र ग्रहैर्द्यौरिव संबभौ ।
शय्यासनविहारांश्च सुबहून्रत्नसंवृतान् ॥ ७
घटान्पात्रीकटाहानि कलशानि समन्ततः ।
न ते किञ्चिदसौवर्णमपश्यंस्तत्र पार्थिवाः ॥ ८
भुञ्जानानां च विप्राणां स्वादुभोज्यैः पृथग्विधैः ।
अनिशं श्रूयते तत्र मुदितानां महात्मनाम् ॥ ९
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकाराः संजल्पाः श्रूयन्ते तत्र नित्यशः ॥ १०
ओदनानां विकाराणि स्वादूनि च बहूनि च ।
विविधानि च भक्ष्याणि पेयानि मधुराणि च ॥ ११
ददुर्द्विजानां सततं राजप्रेष्या महाध्वरे ।
पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां तदा ॥ १२
स्थापितस्तत्र संज्ञार्थं शङ्खोऽध्मायत नित्यशः ।
मुहुर्मुहुः प्रणादस्तु तस्य शङ्खस्य भारत ॥ १३
उत्तमः श्रूयते शब्दः श्रुत्वा विस्मयमागमन् ।

एवं प्रवृत्ते यज्ञे तु तुष्टपुष्टजनायुते ॥ १४
अन्नस्य बहुशो राजन्नुत्सेधाः पर्वतोपमाः ।
दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदाञ्जनाः ॥ १५
जम्बूद्वीपो हि सकलो नानाजनपदायुतः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्मिन्महाक्रतौ ॥ १६
तत्र राजसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा धनमाजग्मुस्तस्य राज्ञो महाक्रतौ ॥ १७
राजानः स्रग्विणश्चैव संमृष्टमणिकुण्डलाः ।
तान्परीविविषुर्विप्राञ्छतशोऽथ सहस्रशः ॥ १८
विविधान्यन्नपानानि लेह्यानि विविधानि च ।
तेषां नृपोपभोग्यानि ब्राह्मणेभ्यो ददुः स ते १९
नानाविधानि भक्ष्याणि स्वादुपुष्पफलानि च ।
गुलानि स्वादुक्षौद्राणि ददुस्ते ब्राह्मणेषु वै ॥२०
एतानि सततं भुक्त्वा तस्मिन्यज्ञे द्विजातयः ।
परां प्रीतिं ययुः सर्वे मोदमानास्ततस्ततः ॥२१
एवं प्रमुदितं सर्वं बहुशो धनधान्यवत् ।
यज्ञवाटं नृपा दृष्ट्वा विस्मयं परमं ययुः ॥ २२
यथावद्धूयमानाग्निं राजसूयं महाक्रतुम् ।
पाण्डवस्य यथाशास्त्रं जुहुवुः सर्वयाजकाः ॥२३
व्यासधौम्यादयः सर्वे विधिवत्षोडशर्त्विजः ।
स्वस्वकर्माणि चक्रुस्ते पाण्डवस्य महाक्रतौ ॥२४
नाषडङ्गविदत्रासीत्सदस्यो नाबहुश्रुतः ।
नाव्रतो नानुपाध्यायो न पापो नाक्षमो द्विजः२५
न तत्र कृपणः कश्चिद्दरिद्रो न बभूव ह ।
क्षुधितो दुःखितो वापि प्राकृतो वापि मानुषः२६
भोजनं भोजनार्थिभ्यो दापयामास सर्वदा ।
सहदेवो महातेजाः सततं राजशासनात् ॥ २७
संस्तरे कुशलाश्चापि सर्वकर्माणि याजकाः ।
दिवसे दिवसे चक्रुर्यथाशास्त्रार्थचक्षुषः ॥ २८
ब्राह्मणा वेदशास्त्रज्ञाः कथाश्चक्रुश्च सर्वतः ।
रेमिरे च कथान्ते तु सर्वे तस्मिन्महाक्रतौ ॥२९
सा वेदिर्वेदसंपन्नैर्देवद्विजमहर्षिभिः ।
आबभासे तदा कीर्णा नक्षत्रैर्द्यौरिवामला ॥ ३०
पाण्डित्यदर्शनार्थाय केचन द्विजसत्तमाः ।
तर्कार्थमागताः केचित्केचिद्विद्याभिमानिनः ३१
केचिद्दिदृक्षया केचिद्भीत्या राज्ञः प्रतापिनः ।
सर्वेऽप्यवभृथस्नाता याजकाः केचन द्विजाः ॥३२
ततो वै हेमयूपांश्च सर्वरत्नसमाचितान् ।
शोभार्थं कारयामास सहदेवो महाद्युतिः ॥ ३३
ददृशुस्तोरणान्यत्र हेमतालमयानि च ।
स यज्ञस्तोरणैस्तैश्च ग्रहैर्द्यौरिव संबभौ ॥ ३४
तालानां तोरणैर्हैमैर्दान्तैरिव दिशागजैः ।
दिक्षु सर्वासु विन्यस्तैस्तेजोभिर्भास्करैर्यथा ॥ ३५
सकिरीटैर्नृपैश्चैव शुशुभे तत्सदस्तदा ।
देवैर्दिव्यैश्च यक्षैश्च उरगैर्दिव्यमानुषैः ॥ ३६
विद्याधरगणैः कीर्णः पाण्डवस्य महात्मनः ।
स राजसूयः शुशुभे धर्मराजस्य धीमतः ॥ ३७
गन्धर्वगणसङ्कीर्णः शोभितोऽप्सरसां गणैः ।
देवैर्मुनिगणैर्यक्षैर्देवलोक इवापरः ॥ ३८
स किंपुरुषगीतैश्च किन्नरैरुपशोभितः ।
नारदश्च जगौ तत्र तुम्बुरुश्च महाद्युतिः ॥ ३९
विश्वावसुश्चित्रसेनस्तथाऽन्ये गीतकोविदाः ।
रमयन्ति स्म तान्सर्वान्यज्ञकर्मान्तरेष्वथ ॥ ४०
तत्र चाप्सरसः सर्वाः सुन्दर्यः प्रियदर्शनाः ।
ननृतुश्च जगुश्चात्र नित्यं कर्मान्तरेष्वथ ॥ ४१
इतिहासपुराणानि आख्यानानि च सर्वशः ।
ऊचुर्वै शब्दशास्त्रज्ञा नित्यं कर्मान्तरेष्वथ ॥ ४२
भेर्यश्च मुरजाश्चैव मड्डुका गोमुखाश्च ये ।
शृङ्गवंशाम्बुजा वीणाः श्रूयन्ते स्म सहस्रशः ॥४३
लोकेऽस्मिन्सर्वविप्राश्च वैश्याः शूद्रा नृपादयः ।
सर्वे म्लेच्छाः सर्वगणास्त्वादिमध्यान्तजास्तथा ॥
नानादेशसमुद्भूतैर्नानाजातिभिरागतैः ।
पर्याप्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥ ४५
भीष्मद्रोणादयः सर्वे कुरवः ससुयोधनाः ।
वृष्णयश्च समग्राश्च पाञ्चालाश्चापि सर्वशः ॥ ४६
यज्ञेऽस्मिन्सर्वकर्माणि चक्रुर्दासा इव क्रतौ ।
एवं प्रवृत्तो यज्ञः स धर्मराजस्य धीमतः ॥ ४७

शुशुभे च महाबाहो सोमस्येव क्रतुर्यथा ।
वस्त्राणि कम्बलांश्चैव प्रावारांश्चैव सर्वदा ॥ ४८
निष्कहेमजभाण्डानि भूषणानि च सर्वशः ।
प्रददौ तत्र विप्राणां धर्मराजो युधिष्ठिरः ॥ ४९
यानि तत्र महीपालैर्लेभवान्भरतर्षभः ।
तानि सर्वाणि रत्नानि ब्राह्मणानां ददौ तदा'५०

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

युधिष्ठिरेण व्यासादीनां पूजनम् ॥ १ ॥ राज्ञां युधिष्ठिरमामन्त्र्य स्वस्वदेशगमनम् ॥ २ ॥ श्रीकृष्णस्य युधिष्ठिरादीनामन्त्र्य द्वारकां प्रति गमनम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः स कुरुराजस्य सर्वकर्मसमृद्धिमान् ।
यज्ञः प्रीतिकरो राजन्संबभौ विपुलोत्सवः ॥ १
शान्तविघ्नः सुखारम्भः प्रभूतधनधान्यवान् ।
अन्नवान्बहुभक्ष्यश्च केशवेन सुरक्षितः ॥ २
समापयामास च तं राजसूयं महाक्रतुम् ।
'कोटीसहस्रं प्रददौ ब्राह्मणानां महात्मनाम् ॥३
न करिष्यति तं लोके कश्चिदन्यो महीपतिः ।
याजकाः सर्वकामैश्च सततं तत्पुर्धनैः ॥ ४
ततश्चावभृथस्नातः स राजा पाण्डुनन्दनः ।
व्यासं धौम्यं वसिष्ठं च नारदं च महामुनिम् ॥५
सुमन्तुं जैमिनिं पैलं वैशंपायनमेव च ।
याज्ञवल्क्यं च कपिलं कपालं कौशिकं तथा ।
सर्वांश्च ऋत्विक्प्रवरान्पूजयामास सत्कृतान् ॥ ६
युधिष्ठिर उवाच ।
युष्मत्प्रसादात्प्राप्तोऽयं राजसूयो महाक्रतुः ।
जनार्दनप्रसादाद्धि संपूर्णो मे मनोरथः ॥ ७
वैशंपायन उवाच ।
अथ यज्ञं समाप्यान्ते पूजयामास माधवम् ।
बलदेवं च देवेशं भीष्माद्यांश्च कुरूद्वहान् ॥' ८
ततस्त्ववभृथस्नातं धर्मात्मानं युधिष्ठिरम् ।
समस्तं पार्थिवं क्षत्रमुपगम्येदमब्रवीत् ॥ ९
दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवानसि ।
आजमीढाजमीढानां यशः संवर्धितं त्वया ॥१०
कर्मणैतेन राजेन्द्र धर्मश्च सुमहान्कृतः ।
आपृच्छामो नरव्याघ्र सर्वकामैः सुपूजिताः ॥११
स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातुमर्हसि ।
श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः ॥१२
यथार्हं पूज्य नृपतीन्भ्रातॄन्सर्वानुवाच ह ।
राजानः सर्व एवैते प्रीत्याऽस्मान्समुपागताः ॥१३
प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परन्तपाः ।
अनुव्रजत भद्रं वो विषयान्तं नृपोत्तमान् ॥ १४
भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः ।
यथार्हं नृपतीन्सर्वानेकैकं समनुव्रजन् ॥ १५
विराटमन्वयात्तूर्णं धृष्टद्युम्नः प्रतापवान् ।
धनञ्जयो यज्ञसेनं महात्मानं महारथम् ॥ १६
भीष्मं च धृतराष्ट्रं च भीमसेनो महाबलः ।
द्रोणं तु ससुतं वीरं सहदेवो युधां पतिः ॥ १७
नकुलः सुबलं राजन्सहपुत्रं समन्वयात् ।
द्रौपदेयाः ससौभद्राः पार्वतीयान्महारथान् ॥१८
अन्वगच्छंस्तथैवान्यान्क्षत्रियान्क्षत्रियर्षभाः ।
एवं सुपूजिताः सर्वे जग्मुर्विप्राः सहस्रशः ॥ १९
गतेषु पार्थिवेन्द्रेषु सर्वेषु ब्राह्मणेषु च ।
युधिष्ठिरमुवाचेदं वासुदेवः प्रतापवान् ॥ २०
आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन ।
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि ॥ २१
तमुवाचैवमुक्तस्तु धर्मराजो जनार्दनम् ।
तव प्रसादाद्गोविन्द प्राप्तः क्रतुवरो मया ॥ २२
क्षत्रं समग्रमपि च त्वत्प्रसादाद्वशे स्थितम् ।
उपादाय बलिं मुख्यं मामेव समुपस्थितम् ॥२३

कथं त्वद्गमनार्थं मे वाणी वितरतेऽनघ ॥ २४
न ह्यहं त्वामृते वीर रतिं प्राप्नोमि कर्हिचित् ।
अवश्यं चैव गन्तव्या भवता द्वारका पुरी ॥ २५
वैशंपायन उवाच ।
एवमुक्तः स धर्मात्मा युधिष्ठिरसहायवान् ।
अभिगम्याब्रवीत्प्रीतः पृथां पृथुयशा हरिः ॥ २६
साम्राज्यं समनुप्राप्ताः पुत्रास्तेऽद्य पितृष्वसः ।
सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि ॥ २७
अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे ।
सुभद्रां द्रौपदीं चैव सभाजयत केशवः ॥ २८
निष्क्रम्यान्तःपुरात्तस्माद्युधिष्ठिरसहायवान् ।
स्नातश्च कृतजप्यश्च ब्राह्मणान्स्वस्ति वाच्य च २९
ततो मेघवपुःप्रख्यं स्यन्दनं च सुकल्पितम् ।
योजयित्वा महाबाहुर्दारुकः समुपस्थितः ॥ ३०
उपस्थितं रथं दृष्ट्वा तार्क्ष्यप्रवरकेतनम् ।
प्रदक्षिणमुपावृत्य समारुह्य महामनाः ॥ ३१
प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीम् ॥ ३२
तं पद्भ्यामनुवव्राज धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान्वासुदेवं महाबलम् ॥ ३३
ततो मुहूर्तं सङ्गृह्य स्यन्दनप्रवरं हरिः ।
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ ३४
अप्रमत्तः स्थितो नित्यं प्रजाः पाहि विशांपते ।
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ॥ ३५
बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः ।
कृत्वा परस्परेणैव संवादं कृष्णपाण्डवौ ॥ ३६
अन्योन्यं समनुज्ञाप्य जग्मतुः स्वगृहान्प्रति ।
गते द्वारवतीं कृष्णे सात्वतप्रवरे नृप ॥ ३७
महादुर्योधनो राजा शकुनिश्चापि सौबलः ।
'सूतपुत्रश्च राधेयः सह दुःशासनादिभिः ॥ ३८
सर्वकामगुणोपेतैरर्च्यमानास्तु भारत ।'
तस्यां सभायां दिव्यायामवसंस्तत्र पाण्डवैः ॥ ३९

॥ इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

॥ समाप्तं च शिशुपालवधपर्व ॥

---

## (अथ द्यूतपर्व ॥ ७ ॥)

### त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

व्यासंप्रति युधिष्ठिरेण उत्पातफलप्रश्ने व्यासेन तत्कथनपूर्वकं कैलासगमनम् ॥ १ ॥ व्यासोक्तं भ्रातृषु निवेद्य शोचतो युधिष्ठिरस्य अर्जुनेन समाश्वासनम् ॥ २ ॥ युधिष्ठिरेण समयकरणम् ॥ ३ ॥

वैशंपायन उवाच ।
'अनुसंसार्य नृपतीन्पाण्डवाः पाण्डवाग्रजम् ।
अभिजग्मुर्महेष्वासा धर्मराजं युधिष्ठिरम् ॥ १
सोऽनुमेने महाबाहुर्भ्रातॄंश्च सुहृदस्तथा ।'
शिष्यैः परिवृतो व्यासः पुरस्तात्समपद्यत ॥ २
सोऽभ्ययादासनात्तूर्णं भ्रातृभिः परिवारितः ।
पाद्येनासनदानेन पितामहमपूजयत् ॥ ३
अथोपविश्य भगवान्काञ्चने परमासने ।
आस्यतामिति चोवाच धर्मराजं युधिष्ठिरम् ॥ ४
अथोपविष्टं राजानं भ्रातृभिः परिवारितम् ।
उवाच भगवान्व्यासस्तत्तद्वाक्यविशारदः ॥ ५
दिष्ट्या वर्धसि कौन्तेय साम्राज्यं प्राप्य दुर्लभम् ।
वर्धिताः कुरवः सर्वे त्वया कुरुकुलोद्वह ॥ ६
आपृच्छे त्वां गमिष्यामि पूजितोऽसि विशांपते ।
एवमुक्तः स कृष्णेन धर्मराजो युधिष्ठिरः ॥ ७
अभिवाद्योपसङ्गृह्य पितामहमथाब्रवीत् ॥ ८

सभाजयत प्रीणितवान् ॥ २८ ॥
द्विसप्ततितमोध्यायः ॥ ७२ ॥

युधिष्ठिर उवाच ।
संशयो द्विपदां श्रेष्ठ ममोत्पन्नः सुदुर्लभः ।
तस्य नान्योऽस्ति वक्ता वै त्वामृते द्विजपुङ्गव ॥९
उत्पातांस्त्रिविधान्प्राह नारदो भगवानृषिः ।
दिव्यांश्चैवान्तरिक्षांश्च पार्थिवांश्च पितामह ॥१०
'सुमहच्च फलं तेषां भवितेति न संशयः ।'
अपि चैद्यस्य पतनाच्छान्तमौत्पातिकं महत् ॥११
वैशंपायन उवाच ।
राज्ञस्तु वचनं श्रुत्वा पराशरसुतः प्रभुः ।
कृष्णद्वैपायनो व्यास इदं वचनमब्रवीत् ॥ १२
त्रयोदश समा राजन्नुत्पातानां फलं महत् ।
सर्वक्षत्रविनाशाय भविष्यति विशांपते ॥ १३
त्वामेकं कारणं कृत्वा कालेन भरतर्षभ ।
समेतं पार्थिवं क्षत्रं क्षयं यास्यति भारत ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ १४
स्वप्नं द्रक्ष्यसि राजेन्द्र तस्मिन्काल उपस्थिते ।
तत्तेऽहं संप्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥ १५
यान्तं द्रक्ष्यसि राजेन्द्र क्षपान्ते त्वं वृषध्वजम् ।
नीलकण्ठं भवं स्थाणुं कपालिं त्रिपुरान्तकम् १६
उग्रं रुद्रं पशुपतिं महादेवमुमापतिम् ।
हरं शर्वं वृषं शूलं पिनाकिं कृत्तिवाससम् ॥ १७
कैलासकूटप्रतिमे वृषभेऽवस्थितं शिवम् ।
निरीक्षमाणं सततं पितृराजाश्रितां दिशम् ॥१८
एवमीदृशकं स्वप्नं द्रक्ष्यसि त्वं विशांपते ।
मा तत्कृते ह्यनुध्याहि कालो हि दुरतिक्रमः १९
स्वस्ति तेऽस्तु गमिष्यामि कैलासं पर्वतं प्रति ।
अप्रमत्तः स्थितो दान्तः पृथिवीं परिपालय ॥२०
वैशंपायन उवाच ।
एवमुक्त्वा स भगवान्कैलासं पर्वतं ययौ ।
कृष्णद्वैपायनो व्यासः सह शिष्यैः सहानुगैः २१
गते पितामहे राजा चिन्ताशोकसमन्वितः ।
निःश्वसन्नुष्णमसकृत्तमेवार्थं विचिन्तयन् ॥ २२
कथं तु दैवं शक्येत पौरुषेण प्रबाधितुम् ।
अवश्यमेव भविता यदुक्तं परमर्षिणा ॥ २३
ततोऽब्रवीन्महातेजाः सर्वान्भ्रातॄन्युधिष्ठिरः ।
श्रुतं वै पुरुषव्याघ्रा यन्मां द्वैपायनोऽब्रवीत् ॥२४
तदा तद्वचनं श्रुत्वा मरणे निश्चिता मतिः ।
सर्वक्षत्रस्य निधने यद्यहं हेतुरीप्सितः ॥ २५
कालेन निर्मितस्तात को ममार्थोऽस्ति जीवतः ।
एवं ब्रुवन्तं राजानं फाल्गुनः प्रत्यभाषत ॥ २६
मा राजन्कश्मलं घोरं प्रविशो बुद्धिनाशनम् ।
संप्रधार्य महाराज यत्क्षमं तत्समाचर ॥ २७
वैशंपायन उवाच ।
ततोऽब्रवीत्सत्यधृतिर्भ्रातॄन्सर्वान्युधिष्ठिरः ।
द्वैपायनस्य वचनं तत्रैव समचिन्तयत् ॥ २८
अद्यप्रभृति भद्रं वः प्रतिज्ञां मे निबोधत ।
त्रयोदश समास्तात को ममार्थोऽस्ति जीवतः ॥२९
न प्रवक्ष्यामि परुषं भ्रातॄनन्यांश्च पार्थिवान् ।
स्थितो निदेशे ज्ञातीनां योक्ष्ये तत्समुदाहरन् ३०
एवं मे वर्तमानस्य स्वसुतेष्वितरेषु च ।
भेदो न भविता लोके भेदमूलो हि विग्रहः ॥३१
विग्रहं दूरतो रक्षन्प्रियाण्येव समाचरन् ।
वाच्यतां न गमिष्यामि लोकेषु मनुजर्षभाः ॥३२
भ्रातुर्ज्येष्ठस्य वचनं पाण्डवाः संनिशम्य तत् ।
तमेव समवर्तन्त धर्मराजहिते रताः ॥ ३३
संसत्सु समयं कृत्वा धर्मराड्भ्रातृभिः सह ।
पितॄंस्तर्प्य यथान्यायं देवताश्च विशांपते ॥ ३४
कृतमङ्गलकल्याणो भ्रातृभिः परिवारितः ।
गतेषु क्षत्रियेन्द्रेषु सर्वेषु भरतर्षभ ॥ ३५
युधिष्ठिरः सहामात्यः प्रविवेश पुरोत्तमम् ।
दुर्योधनो महाराज शकुनिश्चापि सौबलः ।
सभायां रमणीयायां तत्रैवास्ते नराधिप ॥ ३६

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

युधिष्ठिरसभायां दुर्योधने निर्जलदेशे जलभ्रमेण परिधानमुत्कर्षति सति तथा सजलदेशे स्थलभ्रान्त्या अनवधानगमनेन जले पतति च सति भीमादिभिरुपहासः ॥ १ ॥ चिन्तातान्तं दुर्योधनं प्रति शकुनिना चिन्ताहेतुप्रश्ने दुर्योधनेन तत्कथनपूर्वकं धृतराष्ट्रे स्वदुःखनिवेदनाय शकुनिंप्रति चोदनम् ॥ २ ॥

वैशंपायन उवाच ।
वसन्दुर्योधनस्तस्यां सभायां पुरुषर्षभ ।
शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ १
तस्यां दिव्यानभिप्रायान्ददर्श कुरुनन्दनः ।
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ २
स कदाचित्सभामध्ये धार्तराष्ट्रो महीपतिः ।
स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया ॥ ३
स्ववस्त्रोत्कर्षणं राजा कृतवान्बुद्धिमोहितः ।
दुर्मना विमुखश्चैव परिचक्राम तां सभाम् ॥ ४
ततः स्थले निपतितो दुर्मना व्रीडितो नृपः ।
निःश्वसन्विमुखश्चापि परिचक्राम तां सभाम् ॥५
ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम् ।
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ॥ ६
जले निपतितं दृष्ट्वा भीमसेनो महाबलः ।
जहास जहसुश्चैव किङ्कराश्च सुयोधनम् ॥ ७
वासांसि च शुभान्यस्मै प्रददू राजशासनात् ।
तथागतं तु तं दृष्ट्वा भीमसेनो महाबलः ॥ ८
अर्जुनश्च यमौ चोभौ सर्वे ते प्राहसंस्तदा ।
नामर्षयत्ततस्तेषामवहासममर्षणः ॥ ९
आकारं रक्षमाणस्तु न स तान्समुदैक्षत ।
पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम् ॥ १०
आरुरोह ततः सर्वे जहसुश्च पुनर्जनाः ।
द्वारं तु पिहिताकारं स्फाटिकं प्रेक्ष्य भूमिपः ।
प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः॥११
तादृशं च परं द्वारं स्फाटिकोरुकवाटकम् ।
विघट्टयन्कराभ्यां तु निष्क्रम्याग्रे पपात ह॥१२
द्वारं तु वितताकारं समापेदे पुनश्च सः ।
तद्वृत्तं चेति मन्वानो द्वारस्थानादुपारमत् ॥ १३
एवं प्रलम्भान्विविधान्प्राप्य तत्र विशांपते ।
पाण्डवेयाभ्यनुज्ञातस्ततो दुर्योधनो नृपः ॥ १४
अपहृष्टेन मनसा राजसूये महाक्रतौ ।
प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयम् ॥ १५
पाण्डवश्रीप्रतप्तस्य ध्यायमानस्य गच्छतः ।
दुर्योधनस्य नृपतेः पापा मतिरजायत ॥ १६
पार्थान्सुमनसो दृष्ट्वा पार्थिवांश्च वशानुगान् ।
कृत्स्नं चापि हितं लोकमाकुमारं कुरूद्वह ॥ १७
महिमानं परं चापि पाण्डवानां महात्मनाम् ।
दुर्योधनो धार्तराष्ट्रो विवर्णः समपद्यत ॥ १८
स तु गच्छन्ननेकाग्रः सभामेकोऽन्वचिन्तयत् ।
श्रियं च तामनुपमां धर्मराजस्य धीमतः ॥ १९
प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्योधनस्तदा ।
नाभ्यभाषत्सुबलजं भाषमाणं पुनःपुनः ॥ २०
अनेकाग्रं तु तं दृष्ट्वा शकुनिः प्रत्यभाषत ।
दुर्योधन कुतोमूलं निःश्वसन्निव गच्छसि ॥ २१
दुर्योधन उवाच ।
दृष्ट्वेमां पृथिवीं कृत्स्नां युधिष्ठिरवशानुगाम् ।
जितामस्त्रप्रतापेन श्वेताश्वस्य महात्मनः ॥ २२
तं च यज्ञं तथाभूतं दृष्ट्वा पार्थस्य मातुल ।
यथा शक्रस्य देवेषु तथाभूतं महाद्युतेः ॥ २३
अमर्षेण तु संपूर्णो दह्यमानो दिवानिशम् ।
शुचिशुक्रागमे काले शुष्ये तोयमिवाल्पकम्॥२४
पश्य सात्वतमुख्येन शिशुपालो निपातितः ।
न च तत्र पुमानासीत्कश्चित्तस्य पदानुगः ॥२५
दह्यमाना हि राजानः पाण्डवोत्थेन वह्निना ।
क्षान्तवन्तोऽपराधं ते को हि तत्क्षन्तुमर्हति॥२६
वासुदेवेन तत्कर्म यथाऽयुक्तं महत्कृतम् ।
सिद्धं च पाण्डुपुत्राणां प्रतापेन महात्मनाम्॥२७
तथाहि रत्नान्यादाय विविधानि नृपा नृपम् ।
उपातिष्ठन्त कौन्तेयं वैश्या इव करप्रदाः ॥ २८
श्रियं तथागतां दृष्ट्वा ज्वलन्तीमिव पाण्डवे ।

अमर्षवशमापन्नो दह्यामि न तथोचितः ॥ २९
वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषम् ।
अपो वापि प्रवेक्ष्यामि न हि शक्ष्यामि जीवितुं ३०
को हि नाम पुमाँल्लोके मर्षयिष्यति सत्त्ववान् ।
सपत्नानृद्ध्यतो दृष्ट्वा हीनमात्मानमेव च ॥ ३१
सोऽहं न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि ।
योऽहं तां मर्षयाम्यद्य तादृशीं श्रियमागताम् ३२
ईश्वरत्वं पृथिव्याश्च वसुमत्तां च तादृशीम् ।
यज्ञं च तादृशं दृष्ट्वा मादृशः को न संज्वरेत् ३३
अशक्तश्चैक एवाहं तामाहर्तुं नृपश्रियम् ।
सहायांश्च न पश्यामि तेन मृत्युं विचिन्तये॥३४
दैवमेव परं मन्ये पौरुषं च निरर्थकम् ।
दृष्ट्वा कुन्तीसुते शुभ्रां श्रियं तामहतां तथा ॥३५
कृतो यत्नो मया पूर्वं विनाशे तस्य सौबल ।
तच्च सर्वमतिक्रम्य संवृद्धोऽप्स्विव पङ्कजम् ॥ ३६
तेन दैवं परं मन्ये पौरुषं च निरर्थकम् ।
धार्तराष्ट्राश्च हीयन्ते पार्था वर्धन्ति नित्यशः ।
'कृष्णस्तु सुमनास्तेषां विवर्धयति संपदः ॥' ३७
सोऽहं श्रियं च तां दृष्ट्वा सभां तां च तथाविधाम्।
रक्षिभिश्चावहासं तं परितप्ये यथाऽग्निना ॥ ३८
स मामभ्यनुजानीहि मातुलाद्य सुदुःखितम् ।
अमर्षं च समाविष्टं धृतराष्ट्रे निवेदय ॥ ३९

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

शकुनिना दुर्योधनंप्रति पाण्डवानां पौरुषेणाजय्यत्वकथनपूर्वकं द्यूतेन जेष्यामीति समाश्वासनादिकम् ॥ १ ॥

शकुनिरुवाच ।
दुर्योधन न तेऽमर्षः कार्यः प्रति युधिष्ठिरम् ।
भागधेयानि हि स्वानि पाण्डवा भुञ्जते सदा॥१
विधानं विविधाकारं परं तेषां विधानतः ।
अनेकैरभ्युपायैश्च त्वया न शकिताः पुरा ॥ २
आरब्धा हि महाराज पुनःपुनररिन्दम ।
विमुक्ताश्च नरव्याघ्रा भागधेयपुरस्कृताः ।
'उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु ॥' ३
तैर्लब्धा द्रौपदी भार्या द्रुपदश्च सुतैः सह ।
सहायाः पृथिवीपाला वासुदेवश्च वीर्यवान् ॥ ४
लब्धश्चानभिभूतार्थैः पित्र्योंशः पृथिवीपते ।
विवृद्धस्तेजसा तेषां तत्र का परिदेवना ॥ ५
धनञ्जयेन गाण्डीवमक्षय्यौ च महेषुधी ।
लब्धान्यस्त्राणि दिव्यानि तोषयित्वा हुताशनम्६
तेन कार्मुकमुख्येन बाहुवीर्येण चात्मनः ।
कृता वशे महीपालास्तत्र का परिदेवना ॥ ७
अग्निदाहान्मयं चापि मोक्षयित्वा स दानवम् ।
सभां तां कारयामास सव्यसाची परन्तपः ॥ ८
तेन चैव मयेनोक्ताः किंकरा नाम राक्षसाः ।
वहन्ति तां सभां भीमास्तत्र का परिदेवना ॥ ९
यच्चासहायतां राजन्नुक्तवानसि भारत ।
तन्मिथ्या भ्रातरो हीमे तव सर्वे वशानुगाः १०
द्रोणस्तव महेष्वासः सह पुत्रेण वीर्यवान् ।
सूतपुत्रश्च राधेयो दृढधन्वा महारथः ॥ ११
'स एकः समरे सर्वान्पाण्डवान्सहसोमकान् ।
विजेष्यति महाबाहो किं सहायैः करिष्यसि॥१२
भीष्मश्च पुरुषव्याघ्रो गौतमश्च महारथः ।
जयद्रथश्च बलवान्सोमदत्तस्तथैव च ॥' १३
अहं च सह सोदर्यैः सौमदत्तिश्च पार्थिवः ।
एतैस्त्वं सहितः सर्वैर्जय कृत्स्नां वसुन्धराम्॥१४
दुर्योधन उवाच ।
त्वया च सहितो राजन्नेतैश्चान्यैर्महारथैः ।
एतानहं विजेष्यामि यदि त्वमनुमन्यसे ॥ १५
एतेषु विजितेष्वद्य भविष्यति मही मम ।
सर्वे च पृथिवीपालाः सभा सा च महाधना१६
शकुनिरुवाच ।
धनञ्जयो वासुदेवो भीमसेनो युधिष्ठिरः ।
नकुलः सहदेवश्च द्रुपदश्च सहात्मजैः ॥ १७

नैते युधि पराजेतुं शक्या देवगणैरपि ।
महारथा महेष्वासाः कृतास्त्रा युद्धदुर्मदाः ॥ १८
अहं तु तद्विजानामि विजेतुं येन शक्यते ।
युधिष्ठिरं स्वयं राजंस्तन्निबोध जुषस्व च ॥ १९
दुर्योधन उवाच ।
अप्रमादेन सुहृदामन्येषां च महात्मनाम् ।
यदि शक्या विजेतुं ते तन्ममाचक्ष्व मातुल ॥२०
शकुनिरुवाच ।
द्यूतप्रियश्च कौन्तेयो न स जानाति देवितुम् ।
समाहूतश्च राजेन्द्रो न शक्ष्यति निवर्तितुम् ॥२१
देवने कुशलश्चाहं न मेऽस्ति सदृशो भुवि ।
त्रिषु लोकेषु कौरव्य तं त्वं द्यूते समाह्वय ॥२२
तस्याक्षकुशलो राजन्नादास्येऽहमसंशयम् ।
राज्यं श्रियं च तां दीप्तां त्वदर्थं पुरुषर्षभ ॥२३
इदं तु सर्वं त्वं राज्ञे दुर्योधन निवेदय ।
अनुज्ञातस्तु ते पित्रा विजेष्ये तान्न संशयः ॥२४
दुर्योधन उवाच ।
त्वमेव कुरुमुख्याय धृतराष्ट्राय सौबल ।
निवेदय यथान्यायं नाहं शक्ष्ये निवेदितुम् ॥२५

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

शकुनिना दुर्योधनस्य चिन्तया कार्श्यादिकं बोधितेन धृतराष्ट्रेण दुर्योधनंप्रति चिन्ताकारणप्रश्नः ॥ १ ॥ दुर्योधनेन तत्कथनपूर्वकं धृतराष्ट्रं प्रति द्यूताभ्यनुज्ञानप्रार्थनम् ॥ २ ॥ धृतराष्ट्रेण द्यूतसभानिर्माणाज्ञापनपूर्वकं पाण्डवानयनाय विदुरं प्रति चोदनम् ॥ ३ ॥

वैशंपायन उवाच ।
अनुभूय तु राज्ञस्तं राजसूयं सुदुर्मतिः ।
'युधिष्ठिरस्य शकुनिर्दुर्योधनसुसंयुतः ॥ १
विवेश हास्तिनपुरं दुर्योधनमतेन सः ।
बाढमित्येव शकुनिर्दृढं हृदि चकार ह ॥ २
अस्वस्थतां च तां दृष्ट्वा धार्तराष्ट्रस्य पापकृत् ।
भारतानां च दुष्टात्मा क्षयाय हि नृपक्षयः ॥'३
प्रियकृन्मतमाज्ञाय पूर्वं दुर्योधनस्य तत् ।
प्रज्ञाचक्षुषमासीनं शकुनिः सौबलस्तदा ॥ ४
दुर्योधनवचः श्रुत्वा धृतराष्ट्रं जनाधिपम् ।
उपगम्य महाप्राज्ञं शकुनिर्वाक्यमब्रवीत् ॥ ५
शकुनिरुवाच ।
दुर्योधनो महाराज विवर्णो हरिणः कृशः ।
दीनश्चिन्तापरश्चैव तं विद्धि मनुजाधिप ॥ ६
न वै परीक्षसे सम्यगसह्यं शत्रुसंभवम् ।
ज्येष्ठपुत्रस्य हृच्छोकं किमर्थं नावबुध्यसे ॥ ७
'एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः ।
दुर्योधनं समाहूय इदं वचनमब्रवीत् ॥' ८
धृतराष्ट्र उवाच ।
दुर्योधन कुतोमूलं भृशमार्तोऽसि पुत्रक ।
श्रोतव्यश्चेन्मया सोऽर्थो ब्रूहि मे कुरुनन्दन ॥९
अयं त्वां शकुनिः प्राह विवर्णं हरिणं कृशम् ।
चिन्तयंश्च न पश्यामि शोकस्य तव संभवम् ॥१०
ऐश्वर्यं हि महत्पुत्र त्वयि सर्वं प्रतिष्ठितम् ।
भ्रातरः सुहृदश्चैव नाचरन्ति तवाप्रियम् ॥ ११
आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥१२
शयनानि महार्हाणि योषितश्च मनोरमाः ।
गुणवन्ति च वेश्मानि विहाराश्च यथासुखम् ॥१३
देवानामिव ते सर्वं वाचि बद्धं न संशयः ।
स दीन इव दुर्धर्ष कस्माच्छोचसि पुत्रक ॥ १४
'मात्रा पित्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम् ।
प्राप्तस्त्वमसि तत्तात निखिलं नः कुलश्रियम् १५
उपस्थितः सर्वकामैस्त्रिदिवे वासवो यथा ।
विविधैरन्नपानैश्च प्रवरैः किं नु शोचसि ॥ १६

कुतोमूलं किंमूलम् । कुतइति प्रथमार्थे तसिः ॥ ९ ॥

निरुक्तं निगमं छन्दः षडङ्गान्यस्त्रशास्त्रवान् ।
अधीती कृतविद्यस्त्वं दशव्याकरणैः कृपात्॥१७
हलायुधात्कृपाद्द्रोणादस्त्रविद्यामधीतवान् ।
भ्राता ज्येष्ठः स्थितो राज्ये किमु शोचसि पुत्रक१८
पृथग्जनैरलभ्यं यदशनाच्छादनं बहु ।
प्रभुः सन्भुञ्जसे पुत्र संस्तुतः सूतमागधैः ॥ १९
तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् ।
लोके सिञ्ज्येष्ठभागन्यस्तन्ममाचक्ष्व पृच्छतः॥२०
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा मन्दः क्रोधवशानुगः ।
पितरं प्रत्युवाचेदं स्वमतिं संप्रकाशयन् ॥' २१
दुर्योधन उवाच ।
अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा ।
अमर्षं धारये चोग्रं निनीषुः कालपर्ययम् ॥ २२
अमर्षणः स्वाः प्रकृतीरभिभूय परं स्थितः ।
क्लेशान्मुमुक्षुः परजान्स वै पुरुष उच्यते ॥ २३
सन्तोषो वै श्रियं हन्ति ह्यभिमानं च भारत ।
अनुक्रोशभये चोभे यैर्वृतो नाश्नुते महत् ॥ २४
न मां प्रीणाति मद्भुक्तं श्रियं दृष्ट्वा युधिष्ठिरे ।
अतिज्वलन्तीं कौन्तेये विवर्णकरणीं मम ॥ २५
सपत्नानृध्यतोत्मानं हीयमानं निशाम्य च ।
अदृश्यामपि कौन्तेय श्रियं पश्यन्निवोद्यताम्॥२६
तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः ।
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ॥ २७
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ।
दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ २८
कदलीमृगमोकानि कृष्णश्यामारुणानि च ।
काम्भोजः प्राहिणोत्तस्मै परार्ध्यानपि कम्बलान् ।
गजयोषिद्गवाश्वस्य शतशोऽथ सहस्रशः ॥ २९
त्रिशतं चोष्ट्रवामीनां शतानि विचरन्त्युत ।
राजन्या बलिमादाय समेता हि नृपक्षये ॥ ३०
पृथग्विधानि रत्नानि पार्थिवाः पृथिवीपते ।
आहरन्क्रतुमुख्येऽस्मिन्कुन्तीपुत्राय भूरिशः ॥३१
न क्वचिद्धि मया तादृग्दृष्टपूर्वो न च श्रुतः ।
यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः ॥ ३२
'असत्यं चेदिदं सर्वं सञ्जयं प्रष्टुमर्हसि ।'
अपर्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप ।
शर्म नैवाभिगच्छामि चिन्तयानो विशांपते॥३३
ब्राह्मणा वाटधानाश्च गोमन्तः शतसङ्घशः ।
त्रिखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः॥३४
कमण्डलूनुपादाय जातरूपमयाञ्शुभान् ।
त्रैखर्वाः प्रतिवेद्यास्मै लेभिरेऽथ प्रवेशनम् ॥ ३५
यथैव मधु शक्राय धारयन्त्यमरस्त्रियः ।
तदस्मै कांस्यमाहार्षीद्वारुणं कलशोदधिः ॥ ३६
शङ्खप्रवरमादाय वासुदेवोऽभिषिक्तवान् ।
शैक्यं रुक्मसहस्रस्य बहुरत्नविभूषितम् ॥ ३७
दृष्ट्वा च मम तत्सर्वं ज्वररूपमिवाभवत् ।
गृहीत्वा तत्तु गच्छन्ति समुद्रौ पूर्वदक्षिणौ ॥३८
तथैव पश्चिमं यान्ति गृहीत्वा भरतर्षभ ।
उत्तरं तु न गच्छन्ति विना तात पतत्रिणः ।
तत्र गत्वाऽर्जुनो दण्डमाजहारामितं धनम्॥३९
'कृतां बैन्दुसरै रत्नैर्मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पूर्णामुदकस्येव भारत ॥ ४०
उत्कर्षन्तं च वासश्च प्राहसन्मां वृकोदरः ।
किङ्कराश्च सभापाला जहसुर्भरतर्षभ ॥ ४१
पित्रोरर्थे विशेषेण प्राव्रण्वं तत्र जीवितम् ।
तत्र स्म यदि शक्तः स्यां घातयेयं वृकोदरम्॥४२
सपत्नेनापहासो हि स मां दहति भारत ॥ ४३
तत्र स्फाटिकतोयां हि स्फाटिकाम्बुजशोभिताम् ।
सभां पुष्करिणीं मत्वा पतितोऽस्मि नराधिप ४४
तत्र मामहसद्भीमः सह पार्थेन सस्वरम् ।
द्रौपदी च सह स्त्रीभिः पातयन्ती मनो मम ४५
क्लिन्नवस्त्रस्य च जले किङ्करा राजचोदिताः ।

कदलीमृगा हरिणविशेषास्तेषां मोकान्यजिनानि तान्येव कृष्णश्यामारुणानि चित्रवर्णानीत्यर्थः ॥ २९ ॥ वाटाः क्षेत्रादिवृत्तयस्तासां धाना अभिनवोद्भेदो येषां ते सस्यादिसंपन्नक्षेत्रादिवृत्ति-मन्त इत्यर्थः ॥ ३४ ॥ शैक्यं वरत्रामयं पात्राधारभूतं शिक्यं कावडीति प्रसिद्धं तत्र स्थितं पात्रं शैक्यम् । एतेन सामुद्रय आप उक्ताः ॥ ३७ ॥ षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

ददुर्वासांसि मेऽन्यानि तच्च दुःखतरं मम ।। ४६
अस्तम्भा इव तिष्ठन्ति स्तम्भा इव सहस्रशः ।
सोऽहं तत्राहतो राजन्स्फटिकाभ्यन्तरे विभो।।४७
अद्वारेण विनिर्गच्छन्द्वारसंस्थानरूपिणा ।
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ४८
आमृशन्निव तां दृष्ट्वा मार्गान्तरमुपाविशम् ।
इदं द्वारमिदं राजन्नद्वारमिति मां प्रति ।
अद्भुतं प्रहसन्वाक्यं बभाषे स वृकोदरः ।। ४९
स्त्रियश्च तत्र मां दृष्ट्वा जहसुस्तादृशं नृप ।
सर्वं हासकरं तेषां सदस्यानां नरर्षभ ।। ५०
न श्रुतानि न दृष्टानि यानि रत्नानि मे क्वचित्।
तानि मे तत्र दृष्टानि तेन तप्तोस्मि दुःखितः ५१
हुताशनं प्रवेक्ष्यामि प्रवेक्ष्यामि महोदधिम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ।।' ५२
इदं चाद्भुतमत्रासीत्तन्मे निगदतः शृणु ।। ५३
पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां सदा ।
स्थापितस्तत्र संज्ञार्थं शङ्खो ध्मायति नित्यशः ५४
मुहुर्मुहुः प्रणदतस्तस्य शङ्खस्य भारत ।
अनिशं शब्दमश्रौषं ततो रोमाणि मेऽहृषन्।।५५
पार्थिवैर्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः ।
अशोभत महाराज नक्षत्रैर्द्यौरिवामला ।। ५६
सर्वरत्नान्युपादाय पार्थिवा वै जनेश्वर ।
यज्ञे तस्य महाराज पाण्डुपुत्रस्य धीमतः ।। ५७
वैश्या इव महीपाला द्विजातिपरिवेषकाः ।
न सा श्रीर्देवराजस्य यमस्य वरुणस्य च ।
गुह्यकाधिपतेर्वापि या श्री राजन्युधिष्ठिरे ।। ५८
तां दृष्ट्वा पाण्डुपुत्रस्य श्रियं परमिकामहम् ।
शान्तिं न परिगच्छामि दह्यमानेन चेतसा ।।५९
'अप्राप्य पाण्डवैश्वर्यं शमो मम न विद्यते ।
अरीन्बाणैः शाययिष्ये शयिष्ये वा हतः परैः ६०
एतादृशस्य मे किं नु जीवितेन परन्तप ।
वर्धन्ते पाण्डवा राजन्वयं हि स्थितवृद्धयः ।।'६१
शकुनिरुवाच ।
यामेतामतुलां लक्ष्मीं दृष्टवानसि पाण्डवे ।
तस्याः प्राप्तावुपायं मे शृणु सत्यपराक्रम ।। ६२
अहमक्षेष्वभिज्ञोऽस्मि पृथिव्यामपि भारत ।
हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने ।। ६३
द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम् ।
आहूतश्चैष्यति व्यक्तं नित्यमेवाह्वयत्स्वयम् ।।६४
नियतं तं विजेष्यामि कृत्वा तु कपटं विभो ।
आनयामि समृद्धिं तां दिव्यां चोपाह्वयस्व तम् ६५
वैशंपायन उवाच ।
एवमुक्तः शकुनिना राजा दुर्योधनस्ततः ।
धृतराष्ट्रमिदं वाक्यमपदान्तरमब्रवीत् ।। ६६
अयमुत्सहते राजञ्श्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि ।। ६७
धृतराष्ट्र उवाच ।
क्षत्ता मन्त्री महाप्राज्ञः स्थितो यस्यास्मि शासने ।
तेन सङ्गम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ६८
स हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हितम् ।
उभयोः पक्षयोर्युक्तं वक्ष्यत्यर्थविनिश्चयम् ।। ६९
दुर्योधन उवाच ।
निवर्तयिष्यति त्वाऽसौ यदि क्षत्ता समेष्यति ।
निवृत्ते त्वयि राजेन्द्र मरिष्येऽहमसंशयम् ।। ७०
स त्वं मयि मृते राजन्विदुरेण सुखी भव ।
भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि।।
वैशंपायन उवाच ।
आर्तवाक्यं तु तत्तस्य प्रणयोक्तं निशम्य सः ।
धृतराष्ट्रोऽब्रवीत्प्रेष्यान्दुर्योधनमते स्थितः ।। ७२
स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम ।
मनोरमां दर्शनीयामाशु कुर्वन्तु शिल्पिनः।।७३
ततः संस्तीर्य रत्नैस्तां तक्ष्ण आनाय्य सर्वशः ।
सुकृतां सुप्रवेशां च निवेदयत मेऽशनैः ।। ७४
दुर्योधनस्य शान्त्यर्थमिति निश्चित्य भूमिपः ।
धृतराष्ट्रो महाराज प्राहिणोद्विदुराय वै ।। ७५
अपृष्ट्वा विदुरं ह्यस्य नासीत्कश्चिद्विनिश्चयः ।
द्यूते दोषांश्च जानन्स पुत्रस्नेहादकृष्यत ।। ७६
तच्छ्रुत्वा विदुरो धीमान्कलिद्वारमुपस्थितम् ।
विनाशमुखमुत्पन्नं धृतराष्ट्रमुपाद्रवत् ।। ७७
सोऽभिगम्य महात्मानं भ्राता भ्रातरमग्रजम् ।

मूर्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत् ॥ ७८
विदुर उवाच ।
नाभिनन्दामि ते राजन्व्यवसायमिमं प्रभो ।
पुत्रैर्भेदो यथा न स्याद्द्यूतहेतोस्तथा कुरु ॥ ७९
धृतराष्ट्र उवाच ।
क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति ।
यदि देवाः प्रसादं नः करिष्यन्ति न संशयः ८०
अशुभं वा शुभं वापि हितं वा यदि वाऽहितम् ।
प्रवर्ततां सुहृद्द्यूतं दिष्टमेतन्न संशयः ॥ ८१
मयि सन्निहिते द्रोणे भीष्मे त्वयि च भारत ।
अनयो दैवविहितो न कथंचिद्भविष्यति ॥ ८२
गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे ।
खाण्डवप्रस्थमद्यैव समानय युधिष्ठिरम् ॥ ८३
न वाच्यो व्यवसायो मे विदुरैतद्ब्रवीमि ते ।
दैवमेव परं मन्ये येनैतदुपपद्यते ॥ ८४
इत्युक्तो विदुरो धीमान्नेदमस्तीति चिन्तयन् ।
आपगेयं महाप्राज्ञमभ्यगच्छत्सुदुःखितः ॥ ८५

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

जनमेजयेन विस्तरेण द्यूतवृत्तान्तकथनप्रार्थनम् ॥ १ ॥ धृतराष्ट्रेण दुर्योधनंप्रति द्यूतनिषेधनम् ॥ २ ॥ दुर्योधनेन धृतराष्ट्रंप्रति भीमादिकृतस्वापहसनादिकथनम् ॥ ३ ॥

जनमेजय उवाच ।
कथं समभवद्द्यूतं भ्रातॄणां तन्महात्ययम् ।
यत्र तद्व्यसनं प्राप्तं पाण्डवैर्मे पितामहैः ॥ १
के च तत्र सभास्तारा राजानो ब्रह्मवित्तम ।
के चैनमन्वमोदन्त के चैनं प्रत्यषेधयन् ॥ २
विस्तरेणैतदिच्छामि कथ्यमानं त्वया द्विज ।
मूलं ह्येतद्विनाशस्य पृथिव्या द्विजसत्तम ॥ ३
सौतिरुवाच ।
एवमुक्तस्ततो राज्ञा व्यासशिष्यः प्रतापवान् ।
आचचक्षेऽथ यद्वृत्तं तत्सर्वं वेदतत्त्ववित् ॥ ४
वैशंपायन उवाच ।
शृणु मे विस्तरेणेमां कथां भारतसत्तम ।
भूय एव महाराज यदि ते श्रवणे मतिः ॥ ५
विदुरस्य मतिं ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः ।
दुर्योधनमिदं वाक्यमुवाच विजने पुनः ॥ ६
अलं द्यूतेन गान्धारे विदुरो न प्रशंसति ।
न ह्यसौ सुमहाबुद्धिरहितं नो वदिष्यति ॥ ७
हितं हि परमं मन्ये विदुरो यत्प्रभाषते ।
क्रियतां पुत्र तत्सर्वमेतन्मन्ये हितं तव ॥ ८
देवर्षिर्वासवगुरुर्देवराजाय धीमते ।
यत्प्राह शास्त्रं भगवान्बृहस्पतिरुदारधीः ।
तद्वेद विदुरः सर्वं सरहस्यं महाकविः ॥ ९
स्थितस्तु वचने तस्य सदाऽहमपि पुत्रक ।
विदुरो वापि मेधावी कुरूणां प्रवरो मतः ॥ १०
उद्धवो वा महाबुद्धिर्वृष्णीनामर्चितो नृप ।
तदलं पुत्र द्यूतेन द्यूते भेदो हि दृश्यते ॥ ११
भेदे विनाशो राज्यस्य तत्पुत्र परिवर्जय ॥ १२
पित्रा मात्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम् ।
प्राप्तस्त्वमसि तन्नाम पितृपैतामहं पदम् ॥ १३
अधीतवान्कृती शास्त्रे लालितः सततं गृहे ।
भ्रातृज्येष्ठः स्थितो राज्ये विन्दसे किं न शोभनम् ॥
पृथग्जनैरलभ्यं यद्भोजनाच्छादनं परम् ।
तत्प्राप्तोसि महाबाहो कस्माच्छोचसि पुत्रक ॥ १५
स्फीतं राष्ट्रं महाबाहो पितृपैतामहं महत् ।
नित्यमाज्ञापयन्भासि दिवि देवेश्वरो यथा ॥ १६
'यादृशं च तवैश्वर्यं तदन्येषां सुदुर्लभम् ।
ये चोपभोगास्ते राजन्मया ते परिकीर्तिताः' ॥ १७
तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् ।
समुत्थितं दुःखकरं तन्मे शंसितुमर्हसि ॥ १८

दुर्योधन उवाच ।
अश्नाम्याच्छादयामीति प्रपश्यन्हीनपौरुषः ।
नामर्षं कुरुते यस्तु पुरुषः सोऽधमः स्मृतः॥१९
न मां प्रीणाति राजेन्द्र लक्ष्मीः साधारणी विभो।
ज्वलितामेव कौन्तेये श्रियं दृष्ट्वा च विव्यथे॥२०
सर्वां च पृथिवीं चैव युधिष्ठिरवशानुगाम् ।
स्थिरोऽस्मि योऽहं जीवामि दुःखादेतद्ब्रवीमि ते २१
आवर्जिता इवाभान्ति नीपाश्चित्रककौकुराः ।
कारस्कारा लोहजङ्घा युधिष्ठिरनिवेशने ॥ २२
हिमवत्सागरानूपाः सर्वे रत्नाकरास्तथा ।
अन्त्याः सर्वे पर्युदस्ता युधिष्ठिरनिवेशने ॥ २३
ज्येष्ठोऽयमिति मां मत्वा श्रेष्ठश्चेति विशांपते ।
युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे ॥ २४
उपस्थितानां रत्नानां श्रेष्ठानामर्घहारिणाम् ।
नादृश्यत परः पारो नापरस्तत्र भारत ॥ २५
न मे हस्तः समभवद्वसु तत्प्रतिगृह्णतः ।
अतिष्ठन्त मयि श्रान्ते गृह्य दूराहृतं वसु ॥ २६
कृतां बिन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पूर्णामुदकस्येव भारत ॥ २७
वस्त्रमुत्कर्षति मयि प्राहसत्स वृकोदरः ।
शत्रोर्ऋद्धिविशेषेण विमूढं रत्नवर्जितम् ॥ २८
तत्र स यदि शक्तः स्यां पातयेऽहं वृकोदरम् ।
यदि कुर्यां समारम्भं भीमं हन्तुं नराधिप ॥ २९
शिशुपाल इवास्माकं गतिः स्यान्नात्र संशयः ।
सपत्नेनावहासो मे स मां दहति भारत ॥ ३०
पुनश्च तादृशीमेव वापीं जलजशालिनीम् ।
मत्वा शिलासमां तोये पतितोऽस्मि नराधिप ३१
तत्र मां प्राहसत्कृष्णः पार्थेन सह सुस्वरम् ।
द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम ॥३२
क्लिन्नवस्त्रस्य तु जले किङ्करा राजनोदिताः ।
ददुर्वासांसि मेऽन्यानि तच्च दुःखं परं मम॥ ३३
प्रलम्भं च शृणुष्वान्यद्वदतो मे नराधिप ।
अद्वारेण विनिर्गच्छन्द्वारसंस्थानरूपिणा ।
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ३४
तत्र मां यमजौ दूरादालोक्याभिहतं तदा ।
बाहुभिः परिगृह्णीतां शोचन्तौ सहिताबुभौ॥३५
उवाच सहदेवस्तु तत्र मां विस्मयन्निव ।
इदं द्वारं धार्तराष्ट्र मा गच्छेति पुनः पुनः ॥३६
भीमसेनेन तत्रोक्तो धृतराष्ट्रात्मजेति च ।
संबोध्य प्रहसित्वा च इतो द्वारं नराधिप ॥ ३७
नामधेयानि रत्नानां पुरस्तान्न श्रुतानि मे ।
यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे ॥ ३८

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

दुर्योधनेन धृतराष्ट्रसमीपे युधिष्ठिराय नानादेशीयराजोपाहृतोपायनवर्णनम् ॥ १ ॥

दुर्योधन उवाच ।
यन्मया पाण्डवेयानां दृष्टं तच्छृणु भारत ।
आहृतं भूमिपालैर्हि वसु मुख्यं ततस्ततः ॥ १
नाविदं मूढमात्मानं दृष्ट्वाहं तदरेर्धनम् ।
फलतो भूमितो वाऽपि प्रतिपद्यस्व भारत ॥ २
और्णान्बैलान्वार्षदंशान् जातरूपपरिष्कृतान् ।
प्रावाराजिनमुख्यांश्च काम्भोजः प्रददौ बहून्॥३
अश्वांस्तित्तिरिकल्माषांस्त्रिशतं शुकनासिकान् ।
उष्ट्रवामीस्त्रिगर्ताश्च पुष्टाः पीलुशमीङ्गुदैः ॥ ४
गोपाः स्त्रीयेन सहितास्तदादाय चतुष्पदम् ।
वसातयोऽन्यद्द्रव्यं च द्वारि तस्यावतस्थिरे ॥ ५
कमण्डलूनुपादाय जातरूपमयाञ्छिवान् ।

नीपादयो राजानः । आवर्जिता दासवद्वशगाः ॥ २२ ॥ पर्युदस्ता दूरक्षिप्ताः ॥ २३ ॥ न समभवत् समर्थो नाभवत् ॥ २६ ॥ सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

नाविदमिति संबन्धः । अपि तथापि मुख्यतो वक्ष्यमाणं धनं प्रतिपद्यस्वेत्यर्थः । फलतो जातं वस्त्रादि । भूमितो जातं हीरादि ॥ २ ॥ वस्त्राणि धान्यद्रव्यं च घ.पाठः ॥ ५ ॥

रत्नानि च हिरण्यं च सुवर्णं चैव केवलम् ॥ ६
प्रीयमाणः प्रसन्नात्मा स्वयं स्वजनसंवृतः ।
त्रैखर्वो रथमुख्येशः पाण्डवाय न्यवेदयत् ॥ ७
यश्च स द्विजमुख्येन राज्ञः शङ्खो निवेदितः ।
प्रीत्या दत्तः कुविन्देन धर्मराजाय धीमते ॥ ८
तं सर्वे भ्रातरो भ्रात्रे ददुः शङ्खं किरीटिने ।
तं प्रत्यगृह्णाद्बीभत्सुस्तोयजं हेममालिनम् ॥ ९
चित्रं निष्कसहस्रेण भ्राजमानं स्वतेजसा ।
रुचिरं दर्शनीयं च पूजितं विश्वकर्मणा ॥ १०
अधारयच्च धर्मश्च तं नमस्य पुनः पुनः ।
योऽनादनेऽपि नदति स ननादाधिकं तदा ११
प्रणादाद्भूमिपास्तस्य पेतुर्हीनाः स्वतेजसा ।
धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः १२
सत्त्वेन स्वेन संपन्ना अन्योन्यप्रियकारिणः ।
विसंज्ञान्भूमिपान्दृष्ट्वा मां च ते प्राहसंस्तदा ॥१३
ततः प्रहृष्टो बीभत्सुरददाद्धेमशृङ्गिणः ।
शतानन‍डुहान्पञ्च द्विजमुख्याय भारत ॥ १४
सुमुखेन बलिर्मुख्यः प्रेषितोऽजातशत्रवे ।
कुविन्देन हिरण्यं च वासांसि विविधानि च ॥१५
काश्मीरराजो मार्द्वीकं शुद्धं च सरसं मधु ।
बलिं च कृत्स्नमादाय पाण्डवायाभ्युपागमत्१६
यवना हयानुपादाय पार्वतीयान्मनोजवान् ।
आसनानि महार्हाणि कम्बलांश्च महाधनान् १७
नवान्सूक्ष्मांश्च हृद्यांश्च परार्ध्यान्सुप्रदर्शनान् ।
अन्यच्च विविधं रत्नं द्वारि ते न्यवतस्थिरे ॥ १८
श्रुतायुरपि कालिङ्गो मणिरत्नमनुत्तमम् ।
अङ्गः स्त्रियो दर्शनीया जातरूपविभूषिताः ॥१९
वङ्गो जाम्बूनदमयान्पर्यङ्कांञ्छतशो नृप ।
दक्षिणात्सागराभ्याशात्प्रावारांश्च परश्शतम् ॥२०
औदकानि सरत्नानि बलिं चादाय भारत ।
अन्येभ्यो भूमिपालेभ्यः पाण्डवाय न्यवेदयत्२१
दार्दुरं चन्दनं मुख्यं भारं षण्णवति द्रुतम् ।
पाण्डवाय ददौ पाण्ड्यः शङ्खांस्तावत एव च २२
चन्दनागरु चानन्तं मुक्तावैडूर्यचित्रिताः ।
चोलश्च केरलश्चोभौ ददतुः पाण्डवाय वै ॥ २३
अश्मको हेमशृङ्गीश्च दोग्ध्रीर्हेमविभूषिताः ।
सवत्साः कुम्भदोहाश्च सहस्राण्यददाद्दश ॥ २४
सैन्धवानां सहस्राणि हयानां पञ्चविंशतिम् ।
अददात्सैन्धवो राजा हेममाल्यैरलङ्कृतान् ॥ २५
सौवीरो हस्तिभिर्युक्तान्रथांश्च त्रिशतं परान् ।
जातरूपपरिष्कारान्मणिरत्नविभूषितान् ॥ २६
मध्यन्दिनार्कप्रतिमांस्तेजसा ज्वलितानिव ।
बलिं च कृत्स्नमादाय पाण्डवाय न्यवेदयत् ॥२७
अवन्तिराजो रत्नानि विविधानि सहस्रशः ।
हाराङ्गदांश्च मुख्यान्वै विविधं च विभूषणम् ॥२८
दासीनामयुतं चापि बलिमादाय भारत ।
सभाद्वारि नरश्रेष्ठ दिदृक्षुरवतिष्ठते ॥ २९
दशार्णश्चेदिराजश्च शूरसेनश्च वीर्यवान् ।
वस्त्राणि मुख्यान्यादाय रत्नानि विविधानि च ।
बलिं च कृत्स्नमादाय पाण्डवाय न्यवेदयत् ॥३०
काशिराजेन हृष्टेन बली राज्ञि निवेदितः ।
अशीतिगोसहस्राणि शतान्यष्टौ च दन्तिनाम् ॥३१
अयुतं च नदीजानां हयानां हेममालिनाम् ।
विविधानि च रत्नानि काशिराजो बलिं ददौ ॥३२
कृतक्षणश्च वैदेहः कौसलश्च बृहद्बलः ।
ददतुर्वाजिमुख्यांश्च सहस्राणि चतुर्दश ॥ ३३
शैब्यो वसादिभिः सार्धं त्रिगर्तो मालवैः सह ।
तेभ्यो रत्नानि ददतुरेकैको भूमिपोऽमितम् ॥ ३४
हारान्मुख्यान्परार्ध्यांश्च विविधं च विभूषणम् ।
शतं दासीसहस्राणि कार्पासिकनिवासिनाम् ॥३५
श्यामास्तन्वीर्दीर्घकेशीर्हेमाभरणभूषिताः ।
बलिं च कृत्स्नमादाय भारुकच्छो नरर्षभ ॥ ३६
शुद्धान्विप्रोत्तमार्हांश्च कम्बलप्रवरान्ददौ ।
ते सर्वे पाण्डुपुत्रस्य द्वार्यतिष्ठन्दिदृक्षवः ॥ ३७
उपायनं यदा दद्युस्तदा द्वारमलभ्यत ।
इन्द्रकृष्टैर्वर्धयन्ति धान्यैर्नदमुखैस्तु ये ॥ ३८
समुद्रनिकटे जाताः परिसिन्धुनिवासिनः ।
ते वै द्रुमाः पारदाश्च काश्यकैरातकैः सह ॥ ३९

बलिं विविधमादाय रत्नानि विविधानि च ।
अजाविकं गोहिरण्यं खरोष्ट्रं फलवन्मधु ॥ ४०
कम्बलान्विविधांश्चैव द्वारि तिष्ठन्ति वारिताः ।
प्राग्ज्योतिषपतिः शूरो म्लेच्छानामधिपो बली ४१
यवनैः सहितो राजा भगदत्तो महाबलः ।
आजानेयान्हयाञ्छीघ्रमादायानिलरंहसः ॥ ४२
बलिं च कृत्स्नमादाय द्वारि तिष्ठति वारितः ।
अश्वसारमयान्भाण्डाञ्छुभान्दन्तत्सरूनसीन् ४३
प्राग्ज्योतिषाधिपो दत्त्वा भगदत्तोऽव्रजत्तदा ।
द्व्यक्षांस्त्र्यक्षांल्ललाटाक्षान्नानादिग्भ्यः समागतान्॥
औष्णीषानहयांश्चैव बाहुकान्पुरुषादकान् ।
एकपादांश्च तत्राहमपश्यं द्वारि वारितान् ॥ ४५
बल्यर्थं ददतस्तस्य हिरण्यं रजतं वसु ।
इन्द्रगोपकसङ्काशाञ्छुकवर्णान्मनोजवान् ॥ ४६
तथैवेन्द्रायुधनिभान्सन्ध्याभ्रसदृशानपि ।
अनेकवर्णानारण्यान्गृहीत्वाश्वांस्तथा बहून् ॥ ४७
जातरूपमनर्घ्यं च ददुस्तस्यैकपादकाः ।
सिंहलश्च तदा राजा परिगृह्य धनं बहु ॥ ४८
गोशीर्षं हरितश्यामं चन्दनप्रवरं महत् ।
भाराणां शतमेकं तु द्वारि तिष्ठति वारितः ॥४९
ये नग्नविषया राजन्बर्बरेयाश्च विश्रुताः ।
शतं दासीसहस्राणां कम्बलांश्च सहस्रशः ।
परिगृह्य महाराज द्वारि तिष्ठन्ति वारिताः ॥५०
पौण्ड्राश्च दामलिप्ताश्च यथाकामकृतो नृपाः ।
कालेयकं च रूप्यं च परिगृह्य परिच्छदान् ॥५२
अगरूंस्फाटिकांश्चैव दन्ताञ्जातीफलानि च ।
तक्कोलांश्च लवङ्गांश्च कर्पूरांश्च महाबल ॥ ५२
अन्यांश्च विविधान्द्रव्यान्परिगृह्योपतस्थिरे ।
एते सर्वे महात्मानो द्वारि तिष्ठन्ति वारिताः ५३
शैलेयश्च ततो राजा पत्रोर्णान्परिगृह्य सः ।
द्वारि तिष्ठन्महाराज द्वारपालैर्निवारितः ॥ ५४
चीना हूणाः कषाः काचाः पर्वतान्तरवासिनः ।
आहार्षुर्दशसाहस्रान्विनीतान्दिक्षु विश्रुतान् ॥५५
औष्णीकं कम्बलं चैव कीटजं मणिजं तथा ।
प्रमाणरागस्पर्शाढ्यं बाह्लीचीनसमुद्भवम् ॥ ५६
रसान् गन्धान्प्रशंसन्तस्ततो द्वारमलभ्यत ।
खर्वटास्तोमराश्चैव शूरा वर्धनकास्तथा ॥ ५७
चेलान्बहुविधान्गृह्य द्वारि तिष्ठन्ति वारिताः ।
प्राकोटा नाटकेयाश्च नन्दीनगरकास्तथा ॥ ५८
नापितास्त्रैपुराश्चैव पञ्चमेयाः सहोरुजाः ।
तथा चाटविकाः सर्वे नानाद्रव्यपरिच्छदान् ॥५९
परिगृह्य महाराज द्वारि तिष्ठन्ति वारिताः ।
शकास्तुषाराः कौरव्य रोमकाः शृङ्गिणोऽश्मकाः ६०
बलादूरुगमा राजन्गणितं चार्बुदं मया ।
कूटीकृतं सुवर्णं च पद्मकिञ्जल्कसंनिभम् ॥ ६१
शितान्दीर्घानसीनन्यान्यष्टिशक्तिपरश्वथान् ।
श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम् ॥६२
बलं मत्तं समादाय द्वारि तिष्ठन्ति वारिताः ।
आसनानि महार्हाणि यानानि शयनानि च ६३
मणिकाञ्चनचित्राणि गजदन्तमयानि च ।
रथांश्च विविधाकाराञ्जाम्बूनदपरिष्कृतान् ॥ ६४
हयैर्विनीतैः संपन्नान्वैयाघ्रपरिवारितान् ।
विचित्रान्सपरिस्तोमांश्चापानि विविधानि च ॥६६
नाराचानर्धनाराचाञ्छस्त्राणि विविधानि च ।
एतद्द्रव्यं महद्गृह्य पूर्वदेशाधिपो नृपः ॥ ६६
प्रविष्टो यज्ञसदनं पाण्डवस्य महात्मनः ।
जन्तुचेलान्द्विसाहस्रान्दुकूलान्ययुतानि च ॥ ६७
कांस्यानि चैव भाण्डानि महार्हाणि कुथानि च ।
एतान्यन्यानि रत्नानि ददौ पार्थस्य वै मुदा ॥६८
अन्यान्बहुविधान्राजन्नराः सागरमाश्रिताः ।
रत्नानि विविधान्गृह्य ददुस्ते पाण्डवाय तु ॥ ६९
मालवाश्च ततो राजन्रत्नानि विविधानि च ।
गोधूमानां च राजेन्द्र द्रोणानां कोटिसंमितम् ॥७०
अन्यांश्च विविधान्धान्यान्परिगृह्य महाबलः ।
पाण्डवाय ददौ प्रीत्या प्रविवेश महाध्वरम् ॥७१
नानारत्नान्बहून्गृह्य सुराष्ट्राधिपतिर्नृपः ।
तैलकुम्भान्महाराज द्रोणानामयुतानि च ॥ ७२
गुडानपि स तान्स्वादून्सहस्रशकटैर्नृपः ।

एतानि सर्वाण्यादाय ददौ कुन्तीसुताय सः॥७३
अन्ये च पार्थिवा राजन्नानादेशसमागताः ।
रत्नानि विविधान्गृह्य ददुस्ते कौरवाय तु ॥ ७४
जम्बूद्वीपे समस्ते तु सराष्ट्रवनपर्वते ।
करं तु न प्रयच्छेत नास्ति पार्थस्य पार्थिवः॥७५
नरः सप्तसु वर्षेषु तद्यज्ञे नास्ति नागतः ।
क्रतुर्नानागणैः कीर्णो बभौ शक्रसदो यथा॥७६
इमांश्च दायान्विविधान्निबोध मम पार्थिव ।
यज्ञार्थे राजभिर्दत्तान्महतो धनसञ्चयान् ॥ ७७
मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ।
ये ते कीचकवेणूनां छायां रम्यामुपासते ॥ ७८
खषा एकासनाद्यर्हाः प्रदरा दीर्घवेणवः ।
पारदाश्च कुलिन्दाश्च तङ्गणाः परतङ्गणाः ॥ ७९
तद्वै पिपीलिकं नाम उद्धृतं यत्पिपीलिकैः ।
जातरूपं द्रोणमेयमहार्षुः कुञ्जशो नराः ॥ ८०
कृष्णवालांश्च चमराञ्छुक्लवालांस्तथा परान् ।
हिमवत्पुष्पजं चैव स्वादुक्षौद्ररसं बहु ॥ ८१
उत्तरेभ्यः कुरुभ्यश्च व्यूढमाल्यैर्महात्मभिः ।
उत्तरादपि कैलासादोषधीः सुमहाबलाः ॥ ८२
पार्वतीयाश्च राजान आहृत्य प्रणताः स्थिताः ।
अजातशत्रवे राजन्द्वारि तिष्ठन्ति वारिताः॥८३
ये परार्ध्या हिमवतः सूर्योदयगिरेरनु ।
एवंरूपाः समुद्रान्ते लौहित्यमभितश्च ये ॥ ८४
फलमूलाशना ये च किराताश्चर्मवाससः ।
चन्दनागरुमुख्यानि महार्हान्कम्बलानि च॥८५
चर्मरत्नसुवर्णानि गन्धानुच्चावचानि च ।
कैरातकीनामयुतं दासीनां च विशांपते ॥ ८६
आहृत्य रमणीयार्थान्दूरगान्मृगपक्षिणः ।
निचितं पर्वतेभ्यश्च हिरण्यं भूरिवर्चसम् ॥ ८७
बलिं च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः ।
कापव्या दरदा दर्वाः शूरा वै यमकास्तथा॥८८
औदुम्बरा दुर्विभागा द्वारि तिष्ठन्ति वारिताः ।
काश्मीराश्च कुमाराश्च गौरका हंसकास्तथा ॥८९

शिबित्रैगर्तयौधेया राजन्या मद्रकैः सह ।
वसुतेयाः समौलेया दाहक्षुद्रकमालवैः ॥ ९०
चौण्डिकाश्चौदकाश्चैव साल्वाश्चैव विशांपते ।
अङ्कवङ्काश्च यवना अनवद्या गयैः सह ॥ ९१
सुजातयः श्रेणिमन्तः श्रेयांसः शस्त्रधारिणः ।
आहार्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे ॥ ९२
वङ्गाः कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः ।
दुकूलं कौशिकं चैव पत्रोर्णं चैव भारत ॥ ९३
उपावृत्ता नृपास्तस्य ददुः प्रीतिं न चागमन् ।
उच्यन्ते तत्र हि द्वार्स्थैर्बलिमादाय विष्ठिताः॥९४
ईषादन्तान्हेमकक्ष्यान्पद्मवर्णान्कुथावृतान् ।
शैलाभान्नित्यमत्तांश्चाप्यभितः काम्यकं सरः॥९५
क्षमावतः कुलीनांश्च कुञ्जरान्सपरिच्छदान् ।
दत्त्वैकैको दशशतान्द्वारेण प्रविशन्त्विति ॥ ९६
वैदेहकाश्च पुण्ड्राश्च गौलेयास्ताम्रलिप्तकाः ।
मरुकाः काशिका दर्दा भौमेया नटनाटकाः ९७
कर्णाटाः कांस्यकुट्टाश्च पद्मजालाः सतीनराः ।
दाक्षिणात्याः पुलिन्दाश्च शबरास्तङ्कणाः खषाः॥
बर्बरा यवनाश्चैव गर्गराभीरकास्तथा ।
पल्लवाः शककारूशास्तुम्बकाः काशिकास्तदा९९
एते चान्ये च बहवो नानादिग्भ्यः समागताः ।
अन्यैश्चोपहृतान्यत्र रत्नानि हि महात्मभिः॥ १००
समुद्रसारवैडूर्यान्मुक्ताः शङ्खास्तथैव च ।
शुभावर्ताञ्छुभाञ्छुक्तीःसिंहलाःसमुपाहरन् १०१
संभृतान्मणिचीरैश्च श्यामांस्ताम्रान्तलोचनान् ।
राजा चित्ररथो नाम गन्धर्वो वासवानुगः ।
शतानि चत्वार्यददद्धयानां वातरंहसाम्॥ १०२
तुम्बुरुस्तु प्रमुदितो गन्धर्वो वाजिनां शतम् ।
आम्रपत्रसवर्णानामददद्धेममालिनाम् ॥ १०३
कृती राजा च कौरव्य शूकराणां विशांपते ।
अददद्गजरत्नानां शतानि सुबहून्यथ ॥ १०४
विराटेन तु मत्स्येन बल्यर्थं हेममालिनाम् ।
कुञ्जराणां सहस्रे द्वे मत्तानां समुपाहृते ॥ १०५

शूकराणां देशविशेषाणाम् ॥ १०४ ॥

अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

पांसुराष्ट्राद्वसुदानो राजा षड्विंशतिं गजान् ।
अश्वानां च सहस्रे द्वे राजन्काञ्चनमालिनाम् १०६
जवसत्वोपपन्नानां वयस्थानां नराधिप ।
बलिं च कृत्स्नमादाय पाण्डवेभ्यो न्यवेदयत् १०७
यज्ञसेनेन दासीनां सहस्राणि चतुर्दश ।
दासानामयुतं चैव सदाराणां विशांपते ॥ १०८
गजयुक्ता महाराज रथाः षड्विंशतिस्तथा ।
राज्यं च कृत्स्नं पार्थेभ्यो यज्ञार्थं वै निवेदितम् १०९
वासुदेवोऽपि वार्ष्णेयो मानं कुर्वन्किरीटिनः ।
अददद्गजमुख्यानां सहस्राणि चतुर्दश ॥ ११०
आत्मा हि कृष्णः पार्थस्य कृष्णस्यात्मा धनञ्जयः ।
यद्ब्रूयादर्जुनः कृष्णं सर्वं कुर्यादसंशयम् ॥ १११
कृष्णो धनञ्जयस्यार्थे स्वर्गलोकमपि त्यजेत् ।
तथैव पार्थः कृष्णार्थे प्राणानपि परित्यजेत् ११२
सुरभींश्चन्दनरसान्हेमकुम्भसमास्थितान् ।
मलयाद्दर्दुराच्चैव चन्दनागुरुसञ्चयान् ॥ ११३
मणिरत्नानि भास्वन्ति काञ्चनं सूक्ष्मवस्त्रकम् ।
चोलपाण्ड्यावपि द्वारं न लेभाते ह्युपस्थितौ ११४
समुद्रसारं वैदूर्यं मुक्तासङ्घांस्तथैव च ।
शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन् ॥ ११५
संवृता मणिचीरैस्तु श्यामास्ताम्रान्तलोचनाः ।
ता गृहीत्वा नरास्तत्र द्वारि तिष्ठन्ति वारिताः ११६
प्रीत्यर्थं ब्राह्मणाश्चैव क्षत्रियाश्च विनिर्जिताः ।
उपाजह्रुर्विशश्चैव शूद्राः शुश्रूषवस्तथा ॥ ११७
प्रीत्या च बहुमानाच्चाप्युपागच्छन्युधिष्ठिरम् ।
सर्वे म्लेच्छाः सर्ववर्णा आदिमध्यान्तजास्तथा ११८
नानादेशसमुत्थैश्च नानाजातिभिरेव च ।
पर्यस्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥ ११९
उच्चावचानुपग्राहान्राजभिः प्रापितान्बहून् ।
शत्रूणां पश्यतो दुःखान्मुमूर्षा मे व्यजायत १२०
भृत्यास्तु ये पाण्डवानां तांस्ते वक्ष्यामि पार्थिव ।
येषामामं च पक्वं च संविधत्ते युधिष्ठिरः ॥ १२१
अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः ।
रथानामर्बुदं चापि पादाता बहवस्तथा ॥ १२२
प्रमीयमाणमामं च पच्यमानं तथैव च ।
विसृज्यमानं चान्यत्र पुण्याहस्वन एव च ॥ १२३
नाभुक्तवन्तं नापीतं नालङ्कृतमसत्कृतम् ।
अपश्यं सर्ववर्णानां युधिष्ठिरनिवेशने ॥ १२४
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ।
सुप्रीताः परितुष्टाश्च ते ह्याशंसन्त्यरिक्षयम् ॥ १२५
दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ १२६
अभुक्तं भुक्तवद्वापि सर्वमाकुब्जवामनम् ।
अभुञ्जाना याज्ञसेनी प्रत्यवैक्षद्विशांपते ॥ १२७
द्वौ करौ न प्रयच्छेतां कुन्तीपुत्राय भारत ।
सांबन्धिकेन पाञ्चालाः सख्येनान्धकवृष्णयः १२८

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

दुर्योधनेन धृतराष्ट्रसमीपे राजसूयवर्णनादि ॥ १ ॥

दुर्योधन उवाच ।
आर्यास्तु ये वै राजानः सत्यसन्धा महाव्रताः ।
पर्याप्तविद्या वक्तारो वेदान्तावभृथप्लुताः ॥ १
धृतिमन्तो ह्रीनिषेवा धर्मात्मानो यशस्विनः ।
मूर्धाभिषिक्तास्ते चैनं राजानः पर्युपासते ॥ २
दक्षिणार्थं समानीता राजभिः कांस्यदोहनाः ।
आरण्या बहुसाहस्रा अपश्यंस्तत्रतत्र गाः ॥ ३
आजह्रुस्तत्र सत्कृत्य स्वयमुद्यम्य भारत ।
अभिषेकार्थमव्यग्रा भाण्डमुच्चावचं नृपाः ॥ ४
बाह्लीको रथमाहार्षीज्जाम्बूनदविभूषितम् ।
सुदक्षिणस्तु युयुजे श्वेतैः काम्भोजजैर्हयैः ॥ ५

ह्रीनिषेवा लज्जावन्तः ॥ २ ॥

सुनीथः प्रीतिमांश्चैव ह्यनुकर्ष महाबलः ।
ध्वजं चेदिपतिश्चैवमहार्षीत्स्वयमुद्यतम् ॥ ६
दाक्षिणात्यः सन्नहनं स्रगुष्णीषे च मागधः ।
वसुदानो महेष्वासो गजेन्द्रं षष्टिहायनम् ॥ ७
मत्स्यस्त्वक्षान्हेमनद्धानेकलव्य उपानहौ ।
आवन्त्यस्त्वभिषेकार्थमपो बहुविधास्तथा ॥ ८
चेकितान उपासङ्गं धनुः काश्य उपाहरत् ।
असिं च सुत्सरुं शल्यः शैक्यं काञ्चनभूषणम् ॥ ९
अभ्यषिञ्चत्ततो धौम्यो व्यासश्च सुमहातपाः ।
नारदं च पुरस्कृत्य देवलं चासितं मुनिम् ॥ १०
प्रीतिमन्त उपातिष्ठन्नभिषेकं महर्षयः ।
जामदग्न्येन सहितास्तथान्ये वेदपारगाः ॥ ११
अभिजग्मुर्महात्मानो मन्त्रवद्भूरिदक्षिणम् ।
महेन्द्रमिव देवेन्द्रं दिवि सप्तर्षयो यथा ॥ १२
अधारयच्छत्रमस्य सात्यकिः सत्यविक्रमः ।
धनञ्जयश्च व्यजने भीमसेनश्च पाण्डवः ॥ १३
चामरे चापि शुद्धे द्वे यमौ जगृहतुस्तथा ।
उपागृह्णाद्यमिन्द्राय पुराकल्पे प्रजापतिः ॥ १४
तमस्मै शङ्खमाहार्षीद्वारुणं कलशोदधिः ।
शैक्यं निष्कसहस्रेण सुकृतं विश्वकर्मणा ॥ १५
तेनाभिषिक्तः कृष्णेन तत्र मे कश्मलोऽभवत् ।
गच्छन्ति पूर्वादपरं समुद्रं चापि दक्षिणम् ॥ १६
उत्तरं तु न गच्छन्ति विना तात पतत्रिभिः ।
तत्र स्म दध्मुः शतशः शङ्खान्मङ्गलकारकान् ॥ १७
प्राणदन्त समाध्मातास्ततो रोमाणि मेऽहृषन् ।
प्रापतन्भूमिपालाश्च ये तु हीनाः स्वतेजसा ॥ १८
धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः ।
सत्वस्था वीर्यसंपन्ना ह्यन्योन्यप्रियदर्शनाः ॥ १९
विसंज्ञान्भूमिपान्दृष्ट्वा मां च ते प्राहसंस्तदा ।
ततः प्रहृष्टो बीभत्सुः प्रादाद्धेमविषाणिनाम् २०
शतान्यनडुहां पञ्च द्विजमुख्येषु भारत ।
न रन्तिदेवो नाभागो यौवनाश्वो मनुर्न च ॥ २१
न च राजा पृथुर्वैन्यो न चाप्यासीद्भगीरथः ।
ययातिर्नहुषो वापि यथा राजा युधिष्ठिरः ॥ २२
यथाऽतिमात्रं कौन्तेयः श्रिया परमया युतः ।
राजसूयमवाप्यैवं हरिश्चन्द्र इव प्रभुः ॥ २३
एतां दृष्ट्वा श्रियं पार्थे हरिश्चन्द्रे यथा विभो ।
कथं तु जीवितं श्रेयो मम पश्यसि भारत ॥ २४
अन्धेनेव युगं नद्धं विपर्यस्तं नराधिप ।
कनीयांसो विवर्धन्ते ज्येष्ठा हीयन्त एव च ॥ २५
एवं दृष्ट्वा नाभिविन्दामि शर्म
समीक्षमाणोऽपि कुरुप्रवीर ।
तेनाहमेवं कृशतां गतश्च
विवर्णतां चैव सशोकतां च ॥ २६

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ॥ ८० ॥

दुर्योधनंप्रति धृतराष्ट्रेण पाण्डवेषु द्वेषनिषेधनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान्द्विषः ।
द्वेष्टा ह्यसुखमादत्ते यथैव निधनं तथा ॥ १
अव्युत्पन्नं समानार्थं तुल्यमित्रं युधिष्ठिरम् ।
अद्विषन्तं कथं द्विष्यात्त्वादृशो भरतर्षभ ॥ २
तुल्याभिजनवीर्यश्च कथं भ्रातुः श्रियं नृप ।
पुत्र कामयसे मोहान्मैवं भूः शाम्य मा शुचः ॥ ३
अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ ।
ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरम् ॥ ४
आहरिष्यन्ति राजानस्त्वापि विपुलं धनम् ।

---

ज्येष्ठाया अपत्यं ज्यैष्ठिनेयः ॥ १ ॥ अव्युत्पन्नं परकपटानभिज्ञम् । समानार्थं तुल्यधनम् । तुल्यमित्रं त्वन्मित्राद्रोहिणम् अद्विषन्तं च त्वामपीति शेषः ॥ २ ॥ अशीतितमोऽध्यायः ॥ ८० ॥

प्रीत्या च बहुमानाच्च रत्नान्याभरणानि च ॥ ५
अनार्याचरितं तात परस्वस्पृहणं भृशम् ।
स्वसन्तुष्टः स्वधर्मस्थो यः स वै सुखमेधते ॥ ६
'मही कामदुघा सा हि वीरपत्नीति चोच्यते ।
तथा वीरस्य भार्या श्रीस्ते इमे हि कलत्रवत् ॥ ७
तवाप्यस्ति हि चेद्वीर्यं भोक्ष्यसे हि महीमिमाम् ८
अयुक्तमिदमेतत्तु परस्वहरणं भृशम् ।
उभयोर्लोकयोर्दुःखं सुहृदां काङ्क्षतोऽनयम् ॥ ९
अव्यापारः परार्थेषु नित्योद्योगः स्वकर्मसु ।
रक्षणं समुपात्तानामेतद्वैभवलक्षणम् ॥ १०
विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः ।
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ११
बाहूनिवैतान्मा च्छेत्सीः पाण्डुपुत्रास्तथैव ते ।
भ्रातॄणां तद्धनार्थं वै मित्रद्रोहं च मा कुरु ॥१२
पाण्डोः पुत्रान्मा द्विषस्वेह राजं-
स्तथैव ते भ्रातृधनं समग्रम् ।
मित्रद्रोहे तात महानधर्मः
पितामहा ये तव तेऽपि तेषाम् ॥ १३
अन्तर्वेद्यां ददद्वित्तं कामाननुभवन्प्रियान् ।
क्रीडन्स्त्रीभिर्निरातङ्कः प्रशाम्य भरतर्षभ ॥ १४

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

---

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

दुर्योधनेन धृतराष्ट्रोक्तिप्रतिकूलभाषणम् ॥ १ ॥

दुर्योधन उवाच ।
यस्य नास्ति निजा प्रज्ञा केवलं तु बहुश्रुतः ।
न स जानाति शास्त्रार्थं दर्वी सूपरसानिव ॥ १
जानन्वै मोहयसि मां नावि नौरिव संयता ।
स्वार्थे किं नावधानं ते उताहो द्वेष्टि मां भवान् २
न सन्तीमे धार्तराष्ट्रा येषां त्वमनुशासिता ।
भविष्यमर्थमाख्यासि सर्वदा कृत्यमात्मनः ॥ ३
परनेयोऽग्रणीर्यस्य स मार्गान्प्रतिमुह्यति ।
पन्थानमनुगच्छेयुः कथं तस्य पदानुगाः ॥ ४
राजन्परिणतप्रज्ञो वृद्धसेवी जितेन्द्रियः ।
प्रतिपन्नान्स्वकार्येषु संमोहयसि नो भृशम् ॥ ५
लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः ।
तस्माद्राज्ञाऽप्रमत्तेन स्वार्थश्चिन्त्यः सदैव हि ॥ ६
क्षत्रियस्य महाराज जये वृत्तिः समाहिता ।
स वै धर्मस्त्वधर्मो वा स्ववृत्तौ का परीक्षणा ॥ ७
प्रकालयेद्दिशः सर्वाः प्रतोदेनेव सारथिः ।
प्रत्यमित्रश्रियं दीप्तां जिघृक्षुर्भरतर्षभ ॥ ८
प्रच्छन्नो वा प्रकाशो वा योगो योऽरिं प्रबाधते ।
तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम् ॥ ९
शत्रुश्चैव हि मित्रं च न लेख्यं न च मातृका ।
यो वै संतापयति यं स शत्रुः प्रोच्यते नृप ॥१०
असन्तोषः श्रियो मूलं तस्मात्तं कामयाम्यहम् ।
समुच्छ्रये यो यतते स राजन्परमो नयः ॥ ११
ममत्वं हि न कर्तव्यमैश्वर्ये वा धनेऽपि वा ।
पूर्वावाप्तं हरन्त्यन्ये राजधर्मं हि तं विदुः ॥ १२
अद्रोहसमयं कृत्वा चिच्छेद नमुचेः शिरः ।
शक्रः साऽभिमता तस्य रिपौ वृत्तिः सनातनी १३
द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥१४
नास्ति वै जातितः शत्रुः पुरुषस्य विशांपते ।
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः ॥ १५
शत्रुपक्षं समृध्यन्तं यो मोहात्समुपेक्षते ।
व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः १६
अल्पोऽपि ह्यरिरत्यर्थं वर्धमानः पराक्रमैः ।
वल्मीको मूलज इव ग्रसते वृक्षमन्तिकात् ॥ १७

---

कृत्यं इदानीं कर्तव्यम् ॥ ३ ॥ अप्रवासिनं तीर्थाटनादिरहितम् ॥ १४ ॥ साधारणी तुल्या वृत्तिर्जीविका । एकामिषत्वमित्यर्थः ॥ १५ ॥ एकाशीतितमोऽध्यायः ॥ ८१ ॥

आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत ।
एष भारः सत्ववतां न यः शिरसि धिष्ठितः॥१८
जन्मवृद्धिमिवार्थानां यो वृद्धिमभिकाङ्क्षते ।
एधते ज्ञातिषु स वै सद्यो वृद्धिर्हि विक्रमः॥१९
नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति ।
अवाप्स्ये वा श्रियं तां हि शयिष्ये वा हतो युधि २०
एतादृशस्य किं मेऽद्य जीवितेन विशांपते ।
वर्धन्ते पाण्डवा नित्यं वयं त्वस्थिरवृद्धयः ॥ २१

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

दुर्योधनंप्रति शकुनिना द्यूताय प्रोत्साहनम् ॥ १ ॥ धृतराष्ट्राज्ञया शिल्पिभिः सभानिर्माणम् ॥ २ ॥ धृतराष्ट्रेण पाण्डवानयनाय विदुरप्रेषणम् ॥ ३ ॥

शकुनिरुवाच ।
यां त्वमेतां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे ।
तप्यसे तां हरिष्यामि द्यूतेन जयतां वर ॥ १
आहूयतां परं राजन्कुन्तीपुत्रो युधिष्ठिरः ।
अगत्वा संशयमहमयुद्ध्वा च चमूमुखे ॥ २
अक्षान्क्षिपन्नक्षतः सन्विद्वानविदुषो जये ।
ग्लहान्धनूंषि मे विद्धि शरानक्षांश्च भारत ॥ ३
अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्फुरम् ४
दुर्योधन उवाच ।
अयमुत्सहते राजञ्छ्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रेभ्यस्तदनुज्ञातुमर्हसि ॥ ५
धृतराष्ट्र उवाच ।
स्थितोऽस्मि शासने भ्रातुर्विदुरस्य महात्मनः ।
तेन संगम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम्॥६
दुर्योधन उवाच ।
'कृष्णादभ्यधिकः सोऽपि क्षत्ता बोद्धा विशांपते ।
केवलं धर्ममेवाह न तद्विजयसाधकम् ॥ ७
जयश्च धर्मतोपेतस्तथैव भरतर्षभ ।
तस्माद्विनयतो जेता तावुभौ च विरोधिनौ ॥' ८
व्यपनेष्यति ते बुद्धिं विदुरो मुक्तसंशयः ।
पाण्डवानां हिते युक्तो न तथा मम कौरव ॥ ९
नारभेतान्यसामर्थ्यात्पुरुषः कार्यमात्मनः ।
मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ॥ १०
भयं परिहरन्मत्त आत्मानं परिपालयन् ।
वर्षासु क्लिन्नवटवत्तिष्ठन्नेवावसीदति ॥ ११
न व्याधयो नापि यमः प्राप्तुं श्रेयः प्रतीक्षते ।
यावदेव भवेत्कल्पस्तावच्छ्रेयः समाचरेत् ॥ १२
धृतराष्ट्र उवाच ।
सर्वथा पुत्र बलिभिर्विग्रहो मे न रोचते ।
वैरं विकारं सृजति तद्वै शस्त्रमनायसम् ॥ १३
अनर्थमर्थं मन्यसे राजपुत्र
संग्रन्थनं कलहस्यातियाति ।
तद्वै प्रवृत्तं तु यथाकथंचित्
सृजेदसीन्निशितान्सायकांश्च ॥ १४
दुर्योधन उवाच ।
द्यूते पुराणैर्व्यवहारः प्रणीत-
स्तत्रात्ययो नास्ति न संप्रहारः ।
तद्रोचतां शकुनेर्वाक्यमद्य
सभां क्षिप्रं त्वमिहाज्ञापयस्व ॥ १५
स्वर्गद्वारं दीव्यतां नो विशिष्टं
तद्वर्तिनां चापि तथैव युक्तम् ।
भवेदेवं ह्यात्मना तुल्यमेव
दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥ १६
धृतराष्ट्र उवाच ।
वाक्यं न मे रोचते यत्त्वयोक्तं
यत्ते प्रियं तत्क्रियतां नरेन्द्र ।

ग्लहान् पणान् ॥ ३ ॥ आस्फुरमक्षविन्यासपातनादिस्थानम् ॥ ४ ॥ विनयतः अनयात् ॥ ८ ॥ दुरोदरं द्यूतम् ॥ १६ ॥

द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

पश्चात्तप्स्यसे तदुपाक्रम्य वाक्यं
न हीदृशं भावि वचो हि धर्म्यम् ॥ १७
दृष्टं ह्येतद्विदुरेणैव सर्वं
विपश्चिता बुद्धिविद्यानुगेन ।
तदेवैतदवशस्याभ्युपैति
महद्भयं क्षत्रियजीवघाति ॥ १८
वैशंपायन उवाच ।
एवमुक्त्वा धृतराष्ट्रो मनीषी
दैवं मत्वा परमं दुस्तरं च ।
शशासोच्चैः पुरुषान्पुत्रवाक्ये
स्थितो राजा दैवसंमूढचेताः ॥ १९
सहस्रस्तम्भां हेमवैदूर्यचित्रां
शतद्वारां तोरणस्फाटिकाढ्याम् ।
सभामग्र्यां क्रोशमात्रायतां मे
तद्विस्तारामाशु कुर्वन्तु युक्ताः ॥ २०
श्रुत्वा तस्य त्वरिता निर्विशङ्काः
प्राज्ञा दक्षास्तां तदा चक्रुराशु ।
सर्वद्रव्याण्युपजह्रुः सभायां
सहस्रशः शिल्पिनश्चैव युक्ताः ॥ २१
कालेनाल्पेनाथ निष्ठां गतां तां
सभां रम्यां बहुरत्नां विचित्राम् ।
चित्रैर्हैमैरासनैरभ्युपेता-
माचख्युस्ते तस्य राज्ञः प्रतीताः ॥ २२
ततो विद्वान्विदुरं मन्त्रिमुख्य-
मुवाचेदं धृतराष्ट्रो नरेन्द्रः ।
युधिष्ठिरं राजपुत्रं च गत्वा
मद्वाक्येन क्षिप्रमिहानयस्व ॥ २३
सभेयं मे बहुरत्ना विचित्रा
शय्यासनैरुपपन्ना महार्हैः ।
सा दृश्यतां भ्रातृभिः सार्धमेत्य
सुहृद्द्यूतं वर्ततामत्र चेति ॥ २४
वैशंपायन उवाच ।
मतमाज्ञाय पुत्रस्य धृतराष्ट्रो नराधिपः ।
मत्वा च दुस्तरं दैवमेतद्राजंश्चकार ह ॥ २५
अन्यायेन तथोक्तस्तु विदुरो विदुषां वरः ।
नाभ्यनन्दद्वचो भ्रातुर्वचनं चेदमब्रवीत् ॥ २६
विदुर उवाच ।
नाभिनन्दे नृपते प्रैषमेतं
मैवं कृथाः कुलनाशाद्बिभेमि ।
पुत्रैर्भिन्नैः कलहस्ते ध्रुवं स्या-
देतच्छङ्के द्यूतकृते नरेन्द्र ॥ २७
धृतराष्ट्र उवाच ।
नेह क्षत्तः कलहस्तप्स्यते मां
न चेद्दैवं प्रतिलोमं भविष्यत् ।
धात्रा तु दिष्टस्य वशे किलेदं
सर्वं जगच्चेष्टति न स्वतन्त्रम् ॥ २८
तदद्य विदुर प्राप्य राजानं मम शासनात् ।
क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम् ॥ २९

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

विदुरस्य इन्द्रप्रस्थगमनम् ॥ १ ॥ पाण्डवानां द्यूतसभाप्रवेशः ॥ २ ॥

वैशंपायन उवाच ।
ततः प्रायाद्विदुरोऽश्वैरुदारै-
र्महाजवैर्बलिभिः साधु दान्तैः ।
बलान्नियुक्तो धृतराष्ट्रेण राज्ञा
मनीषिणां पाण्डवानां सकाशे ॥ १
सोऽभिपत्य तदध्वानमासाद्य नृपतेः पुरम् ।

प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः ॥ २
स राजगृहमासाद्य कुबेरभवनोपमम् ।
अभ्यागच्छत धर्मात्मा धर्मपुत्रं युधिष्ठिरम् ॥ ३
तं वै राजा सत्यधृतिर्महात्मा
अजातशत्रुर्विदुरं यथावत् ।
पूजापूर्वं प्रतिगृह्याजमीढ-
स्ततोऽपृच्छद्धृतराष्ट्रं सपुत्रम् ॥ ४

युधिष्ठिर उवाच ।
विज्ञायते ते मनसोऽप्रहर्षः
कच्चित्क्षत्तः कुशलेनागतोऽसि ।
कच्चित्पुत्राः स्थविरस्यानुलोमा
वशानुगाश्चापि विशोऽथ कच्चित् ॥ ५

विदुर उवाच ।
राजा महात्मा कुशली सपुत्र
आस्ते वृतो ज्ञातिभिरिन्द्रकल्पः ।
प्रीतो राजन्पुत्रगुणैर्विनीतो
विशोक एवात्मरतिर्महात्मा ॥ ६
इदं तु त्वां कुरुराजोऽभ्युवाच
पूर्वं पृष्ट्वा कुशलं चाव्ययं च ।
इयं सभा त्वत्सभातुल्यरूपा
भ्रातॄणां ते दृश्यतामेत्य पुत्र ॥ ७
समागम्य भ्रातृभिः पार्थ तस्यां
सुहृद्द्यूतं क्रियतां रम्यतां च ।
प्रीयामहे भवतां सङ्गमेन
समागताः कुरवश्चापि सर्वे ॥ ८
दुरोदरा विहिता ये तु तत्र
महात्मना धृतराष्ट्रेण राज्ञा ।
तान्द्रक्ष्यसे कितवान्सन्निविष्टा-
न्नित्यागतोऽहं नृपते तज्जुषस्व ॥ ९

युधिष्ठिर उवाच ।
द्यूते क्षत्तः कलहो विद्यते नः
को वै द्यूतं रोचते बुध्यमानः ।
किं वा भवान्मन्यते युक्तरूपं
भवद्वाक्ये सर्वं एव स्थिताः स्मः ॥ १०

विदुर उवाच ।
जानाम्यहं द्यूतमनर्थमूलं
कृतश्च यत्नोऽस्य मया निवारणे ।
राजा च मां प्राहिणोत्त्वत्सकाशं
श्रुत्वा विद्वञ्श्रेय इहाचरस्व ॥ ११

युधिष्ठिर उवाच ।
के तत्रान्ये कितवा दीव्यमाना
विना राज्ञो धृतराष्ट्रस्य पुत्रैः ।
पृच्छामि त्वां विदुर ब्रूहि नस्तान्
यैर्दीव्यामः शतशः सन्निपत्य ॥ १२

विदुर उवाच ।
गान्धारराजः शकुनिर्विशांपते
राजाऽतिदेवी कृतहस्तो मताक्षः ।
विविंशतिश्चित्रसेनश्च राजा
सत्यव्रतः पुरुमित्रो जयश्च ॥ १३

युधिष्ठिर उवाच ।
महाभयाः कितवाः सन्निविष्टा
मायोपधा देवितारोऽत्र सन्ति ।
धात्रा तु दिष्टस्य वशे किलेदं
सर्वं जगत्तिष्ठति न स्वतन्त्रम् ॥ १४
नाहं राज्ञो धृतराष्ट्रस्य शासना-
न्न गन्तुमिच्छामि कवे दुरोदरम् ।
इष्टो हि पुत्रस्य पिता सदैव
तदस्मि कर्ता विदुरात्थ मां यथा ॥ १५
न चाकामः शकुनिना देविताहं
न चेन्मां जिष्णुराह्वयिता सभायाम् ।
आहूतोऽहं न निवर्ते कदाचित्
तदाहितं शाश्वतं वै व्रतं मे ॥ १६

वैशंपायन उवाच ।
एवमुक्त्वा विदुरं धर्मराजः
प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम् ।

---

द्विजातिभिस्त्रैवर्णिकैः ॥ २ ॥ आत्मरतिः आत्मनः स्वस्योत्कर्ष एव रतिर्यस्य नतु धर्ममन्वीक्षते इति भावः ॥ ६ ॥ अव्ययं धनादेरविनाशम् ॥ ७ ॥ दुरोदरा द्यूतकाराः ॥ ९ ॥ आदि अविभक्तिकनिर्देशः ॥ १७ ॥

प्रायाच्छ्वोभूते सगणः सानुयात्रः
सह स्त्रीभिर्द्रौपदीमादि कृत्वा ॥ १७
दैवं हि प्रज्ञां मुष्णाति चक्षुस्तेज इवापतत् ।
धातुश्च वशमन्वेति पाशैरिव नरः सितः ॥ १८
इत्युक्त्वा प्रययौ राजा सह क्षत्रा युधिष्ठिरः ।
अमृष्यमाणस्तस्याथ समाह्वानमरिन्दमः ॥ १९
बाह्लिकेन रथं यत्तमास्थाय परवीरहा ।
परिच्छन्नो ययौ पार्थो भ्रातृभिः सह पाण्डवः ।
राजश्रिया दीप्यमानो ययौ ब्रह्मपुरःसरः ॥ २०
'संदिदेश ततः प्रेष्यानागतान्नगरं प्रति ।
ततस्ते नृपशार्दूल चक्रुर्वै नृपशासनम् ॥ २१
ततो राजा महातेजाः संयम्य सपरिच्छदम् ।
ब्राह्मणैः स्वस्ति वाच्याथ प्रययौ मन्दिराद्बहिः २२
ब्राह्मणेभ्यो धनं दत्त्वा गत्यर्थं स यथाविधि ।
अन्येभ्यः स तु दत्त्वा च गन्तुमेवोपचक्रमे ॥ २३
सर्वलक्षणसंपन्नं राजहंसपरिच्छदम् ।
तमारुह्य महाराजो गजेन्द्रं षष्टिहायनम् ॥ २४
हारी किरीटी हेमाभः सर्वाभरणभूषितः ।
रराज राजन्पार्थो वै परया नृपशोभया ॥ २५
रुक्मवेदिगतः प्राज्यो ज्वलन्निव हुताशनः ।
ततो जगाम राजा स प्रहृष्टनरवाहनः ॥ २६
रथघोषेण महता पूरयन्वै नभःस्थलम् ।
संस्तूयमानः स्तुतिभिः सूतमागधबन्दिभिः ॥ २७
महासैन्येन सहितो यथादित्यः स्वरश्मिभिः ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ २८
बभौ युधिष्ठिरो राजा पौर्णमास्यामिवोडुराट् ।
चामरैर्हेमदण्डैश्च धूयमानः समन्ततः ॥ २९
जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः ।
प्रत्यगृह्णाद्यथान्यायं यथावद्भरतर्षभः ॥ ३०
तथैव सैनिका राजन्राजानमनुयान्ति ये ।
तेषां हलहलाशब्दो दिवं स्तब्धः प्रतिष्ठितः ॥ ३१
नृपस्याग्रे ययौ राजन्भीमसेनो रथी बली ।
उभौ पार्श्वगतौ राज्ञः सतल्पौ वै सुकल्पितौ ३२
अधिरूढौ यमौ चापि जग्मतुर्भरतर्षभ ।
शोभयन्तौ महासैन्यं तावुभौ रूपशालिनौ ॥ ३३
पृष्ठतोऽनुययौ जिष्णुर्वीरः शस्त्रभृतां वरः ।
श्वेताश्वो गाण्डिवं गृह्य अग्निदत्तं रथं गतः ॥ ३४
सैन्यमध्ये ययौ राजन्कुरुराजो युधिष्ठिरः ।
द्रौपदीप्रमुखा नार्यः सानुगाः सपरिच्छदाः ॥ ३५
आरुह्य ता विचित्राङ्ग्यो यानानि विविधानि च ।
महत्या सेनया राजन्नग्रे राज्ञो ययुस्तदा ॥ ३६
समृद्धनरनागाश्वं सपताकरथध्वजम् ।
संनद्धवरनिस्त्रिंशं पथि निर्घोषनिःस्वनम् ॥ ३७
शङ्खदुन्दुभितालानां वेणुवीणानुनादितम् ।
शुशुभे पाण्डवं सैन्यं प्रयातस्य तदा नृप ॥ ३८
यथा कुबेरो लङ्कायां पुरा चात्यन्तशोभया ।
महत्या सेनया सार्धं गुरुमिन्द्रं स गच्छति ॥ ३९
तथा ययौ स पार्थोऽपि असङ्ख्येयविभूतिना ।
सुसमृद्धेन सैन्येन यथा वैश्रवणस्तथा ॥ ४०
स सरांसि नदीश्चैव वनान्युपवनानि च ।
अत्यक्रामन्महाराज पुरीं चाभ्यवपद्यत ॥ ४१
स हास्तिनसमीपे तु कुरुराजो युधिष्ठिरः ।
चक्रे निवेशनं तत्र ततः स सहसैनिकः ॥ ४२
शिवे देशे समे चैव न्यवसत्पाण्डवस्तदा ।
ततो राजन्समाहूय शोकविह्वलया गिरा ॥ ४३
एतद्वाक्यं च सर्वस्वं धृतराष्ट्रचिकीर्षितम् ।
आचचक्षे यथावृत्तं विदुरोऽथ नृपस्य ह ॥ ४४
तच्छ्रुत्वा भाषितं तेन धर्मराजोऽब्रवीदिदम् ।
न मर्षयाम्यहं क्षत्तः समाह्वानं व्रतं हि मे ।
स्वस्त्यस्तु लोके विप्राणां प्रजानां चैव सर्वदा ४५
वैशंपायन उवाच ।
प्रविवेश ततो राजा नगरं नागसाह्वयम् ।
धृतराष्ट्रेण चाहूतः कालस्य समयेन च ॥' ४६
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ।
समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ ४७
तथा भीष्मेण द्रोणेन कर्णेन च कृपेण च ।
समियाय यथान्यायं द्रौणिना च विभुः सह ४८
समेत्य च महाबाहुः सोमदत्तेन चैव ह ।

दुर्योधनेन सभ्रात्रा सौबलेन च वीर्यवान् ॥ ४९
ये चान्ये तत्र राजानः पूर्वमेव समागताः ।
दुःशासनेन वीरेण सर्वैर्भ्रातृभिरेव च ॥ ५०
जयद्रथेन च तथा कुरुभिश्चापि सर्वशः ।
ततः सर्वैर्महाबाहुर्भ्रातृभिः परिवारितः ॥ ५१
प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य धीमतः ।
ददर्श तत्र गान्धारीं देवीं पतिमनुव्रताम् ॥ ५२
स्नुषाभिः संवृतां शश्वत्ताराभिरिव रोहिणीम् ।
अभिवाद्य स गान्धारीं तया च प्रतिनन्दितः ॥ ५३
ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरम् ॥ ५४
राज्ञा मूर्धन्युपाघ्रातास्ते च कौरवनन्दनाः ।
चत्वारः पाण्डवा राजन्भीमसेनपुरोगमाः ॥ ५५
ततो हर्षः समभवत्कौरवाणां विशांपते ।
तान्दृष्ट्वा पुरुषव्याघ्रान्पाण्डवान्प्रियदर्शनान् ॥ ५६
विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाणि च ।
ददृशुश्चोपयातारो द्रौपदीप्रमुखाः स्त्रियः ॥ ५७
याज्ञसेन्याः परामृद्धिं दृष्ट्वा प्रज्वलितामिव ।
स्नुषास्ता धृतराष्ट्रस्य नातिप्रमनसोऽभवन् ॥ ५८
ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु संविदम् ।
कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ॥ ५९
ततः कृताह्निकाः सर्वे दिव्यचन्दनभूषिताः ।
कल्याणमनसश्चैव ब्राह्मणान्स्वस्ति वाच्य च ॥ ६०
मनोज्ञमशनं भुक्त्वा विविशुः शरणान्यथ ।
उपगीयमाना नारीभिरस्वपन्कुरुपुङ्गवाः ॥ ६१
जगाम तेषां सा रात्रिः पुण्या रतिविहारिणाम् ।
स्तूयमानाश्च विश्रान्ताः काले निद्रामथात्यजन् ॥ ६२
सुखोषितास्ते रजनीं प्रातः सर्वे कृताह्निकाः ।
सभां रम्यां प्रविविशुः कितवैरभिनन्दिताः ॥ ६३

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

शकुनियुधिष्ठिरयोः संवादः ॥ १ ॥ द्यूतनिर्धारणम् ॥ २ ॥

वैशंपायन उवाच ।
प्रविश्य तां सभां पार्था युधिष्ठिरपुरोगमाः ।
समेत्य पार्थिवान्सर्वान्पूजार्हानभिपूज्य च ॥ १
यथावयः समेयाना उपविष्टा यथार्हतः ।
आसनेषु विचित्रेषु स्पर्द्ध्यास्तरणवत्सु च ॥ २
तेषु तत्रोपविष्टेषु सर्वेष्वथ नृपेषु च ।
शकुनिः सौबलस्तत्र युधिष्ठिरमभाषत ॥ ३
शकुनिरुवाच ।
उपस्तीर्णा सभा राजन्सर्वे त्वयि कृतक्षणाः ।
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर ॥ ४
युधिष्ठिर उवाच ।
निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः ।
न च नीतिर्ध्रुवा राजन्किं त्वं द्यूतं प्रशंससि ॥ ५
न हि मानं प्रशंसन्ति निकृतौ कितवस्य हि ।
शकुने मैवं नोऽजैषीरमार्गेण नृशंसवत् ॥ ६
शकुनिरुवाच ।
यो वेत्ति सङ्ख्यां निकृतौ विधिज्ञ-
श्चेष्टास्वखिन्नः कितवोऽक्षजासु ।
महामतिर्यश्च जानाति द्यूतं
स वै सर्वं सहते प्रक्रियासु ॥ ७
अक्षग्लहः सोऽभिभवेत्परं न-
स्तेनैव दोषो भवतीह पार्थ ।
दीव्यामहे पार्थिव मा विशङ्कां
कुरुष्व पाणं च चिरं च मा कृथाः ॥ ८
युधिष्ठिर उवाच ।
एवमाहायमसितो देवलो मुनिसत्तमः ।

यातारः यातरः ॥ ५७ ॥ संविदं मिथः कथाम् । व्यायामः श्रमापनोदनव्यापारः पूर्वो येषां तानि । प्रतिकर्म केशप्रसाधनादिपरिष्कारम् ॥ ५९ ॥ त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

पापं पापहेतुः ॥ ५ ॥ पाणं पणनीयद्रव्यम् ॥ ८ ॥ चतुरशीतितमोऽध्यायः ॥ ८४ ॥

इमानि लोकद्वाराणि यो वै भ्राम्यति सर्वदा॥९
इदं वै देवनं पापं निकृत्या कितवैः सह ।
धर्मेण तु जयो युद्धे तत्परं न तु देवनम्॥ १०
नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत ।
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम्॥ ११
शक्तितो ब्राह्मणार्थाय शिक्षितुं प्रयतामहे ।
तद्वै वित्तं मातिदेवीर्मा जैषीः शकुने परान्॥१२
निकृत्या कामये नाहं सुखान्युत धनानि वा ।
कितवस्येह कृतिनो वृत्तमेतन्न पूज्यते॥ १३
शकुनिरुवाच ।
श्रोत्रियः श्रोत्रियानेति निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः१४
अक्षैर्हि शिक्षितोऽभ्येति निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः१५
अकृतास्त्रं कृतास्त्रश्च दुर्बलं बलवत्तरः ।
एवं कर्मसु सर्वेषु निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः॥१६
एवं त्वं मामिहाभ्येत्य निकृतिं यदि मन्यसे ।
देवनाद्विनिवर्तस्व यदि ते विद्यते भयम्॥ १७
युधिष्ठिर उवाच ।
आहूतो न निवर्तेयमिति मे व्रतमाहितम् ।
विधिश्च बलवान्राजन्दिष्टस्यास्मि वशे स्थितः १८
अस्मिन्समागमे केन देवनं मे भविष्यति ।
प्रतिपाणश्च कोऽन्योस्ति ततो द्यूतं प्रवर्तताम्॥१९
दुर्योधन उवाच ।
अहं दातास्मि रत्नानां धनानां च विशांपते ।
मदर्थे देविता चायं शकुनिर्मातुलो मम॥ २०
युधिष्ठिर उवाच ।
अन्येनान्यस्य वै द्यूतं विषमं प्रतिभाति मे ।
एतद्विद्वन्नुपादत्स्व काममेवं प्रवर्तताम्॥ २१

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

भीष्मद्रोणादीनां द्यूतसभाप्रवेशः ॥१॥ द्यूतोपक्रमः ॥२॥ युधिष्ठिरेण पणीकृतानां सर्ववस्तूनां शकुनिना अपहारः ॥३॥

वैशंपायन उवाच ।
उपोह्यमाने द्यूते तु राजानः सर्व एव ते ।
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः॥ १
भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः ।
नातिप्रीतेन मनसा तेऽन्ववर्तन्त भारत॥ २
ते द्वन्द्वशः पृथक्चैव सिंहग्रीवा महौजसः ।
सिंहासनानि भूरीणि विचित्राणि च भेजिरे॥३
शुशुभे सा सभा राजन्राजभिस्तैः समागतैः ।
देवैरिव महाभागैः समवेतैस्त्रिविष्टपम्॥ ४
सर्वे वेदविदः शूराः सर्वे भास्वरमूर्तयः ।
प्रावर्तत महाराज सुहृद्द्यूतमनन्तरम्॥ ५
युधिष्ठिर उवाच ।
अयं बहुधनो राजन्सागरावर्तसंभवः ।
मणिर्हारोत्तरः श्रीमान्कनकोत्तमभूषणः॥ ६
एतद्राजन्मम धनं प्रतिपाणोऽस्ति कस्तव ।
येन मां त्वं महाराज धनेन प्रतिदीव्यसे॥ ७
दुर्योधन उवाच ।
सन्ति मे मणयश्चैव धनानि सुबहूनि च ।
मत्सरश्च न मेऽर्थेषु जयस्वैनं दुरोदरम्॥ ८
वैशंपायन उवाच ।
ततो जग्राह शकुनिस्तानक्षानक्षतत्त्ववित् ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत॥ ९
युधिष्ठिर उवाच ।
मत्तः कैतवकेनैव यज्जितोऽस्मि दुरोदरे ।
शकुने हन्त दीव्यामो ग्लहमानाः परस्परम्॥१०
सन्ति निष्कसहस्रस्य भाण्डिन्यो भरिताः शुभाः।

---

दुरोदरं पणम् ॥ ८ ॥

भाण्डिन्यो मञ्जूषाः ॥ ११ ॥

कोशो हिरण्यमक्षय्यं जातरूपमनेकशः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ ११
वैशंपायन उवाच ।
कौरवाणां कुलकरं ज्येष्ठं पाण्डवमच्युतम् ।
इत्युक्तः शकुनिः प्राह जितमित्येव तं नृपम् ॥ १२
युधिष्ठिर उवाच ।
अयं सहस्रसमितो वैयाघ्रः सुप्रतिष्ठितः ।
सुचक्रोपस्करः श्रीमान्किङ्किणीजालमण्डितः १३
संह्रादनो राजरथो य इहास्मानुपावहत् ।
जैत्रो रथवरः पुण्यो मेघसागरनिःस्वनः ॥ १४
अष्टौ यं कुररच्छायाः सदश्वा राष्ट्रसंमताः ।
वहन्ति नैषां मुच्येत पदाद्भूमिमुपस्पृशन् ।
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥ १५
वैशंपायन उवाच ।
एवं श्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ १६
युधिष्ठिर उवाच ।
शतं दासीसहस्राणि तरुण्यो हेमभद्रिकाः ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ॥ १७
महार्हमाल्याभरणाः सुवस्त्राश्चन्दनोक्षिताः ।
मणीन्हेम च बिभ्रत्यश्चतुःषष्टिविशारदाः ॥ १८
अनुसेवां चरन्तीमाः कुशला नृत्तसामसु ।
स्नातकानाममात्यानां राज्ञां च मम शासनात् ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ १९
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २०
युधिष्ठिर उवाच ।
एतावन्ति च दासानां सहस्राण्युत सन्ति मे ।
प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा ॥ २१
प्राज्ञा मेधाविनो दान्ता युवानो मृष्टकुण्डलाः ।
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २२
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २३
युधिष्ठिर उवाच ।
सहस्रसङ्ख्या नागा मे मत्तास्तिष्ठन्ति सौबल ।
हेमकक्षाः कृतापीडाः पद्मिनो हेममालिनः ॥ २४
सुदान्ता राजवहनाः सर्वशब्दक्षमा युधि ।
ईषादन्ता महाकायाः सर्वे चाष्टकरेणवः ॥ २५
सर्वे च पुरभेत्तारो नवमेघनिभा गजाः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २६
वैशंपायन उवाच ।
इत्येवंवादिनं पार्थं प्रहसन्निव सौबलः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २७
युधिष्ठिर उवाच ।
रथास्तावन्त एवेमे हेमदण्डाः पताकिनः ।
हयैर्विनीतैः संपन्ना रथिभिश्चित्रयोधिभिः ॥ २८
एकैको ह्यत्र लभते सहस्रपरमां भृतिम् ।
युध्यतोऽयुध्यतो वापि वेतनं मासकालिकम् ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २९
वैशंपायन उवाच ।
इत्येवमुक्ते वचने कृतवैरो दुरात्मवान् ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३०
युधिष्ठिर उवाच ।
अश्वांस्तित्तिरिकल्माषान्गान्धर्वान्हेममालिनः ।
ददौ चित्ररथस्तुष्टो यांस्तान्गाण्डीवधन्वने ॥ ३१
युद्धे जितः पराभूतः प्रीतिपूर्वमरिन्दमः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ ३२
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३३

कम्बवः शङ्खवलयानि । निष्को वक्षोभूषणम् ॥ १७ ॥ चतुष्षष्टिकलासु विशारदाः ॥ १८ ॥ नृत्तसामसु नर्तने गीतिविशेषेषु च ॥ १९ ॥ कृतापीडाः कृतभूषणाः ॥ २४ ॥ ईषा लाङ्गलदण्डः । अष्टकरेणवः अष्टहस्तिनीकाः ॥ २५ ॥ पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

युधिष्ठिर उवाच ।
रथानां शकटानां च श्रेष्ठानां चायुतानि मे ।
युक्तान्येव हि तिष्ठन्ति वाहैरुच्चावचैस्तथा ॥ ३४
एवं वर्णस्य वर्णस्य समुच्चीय सहस्रशः ।
यथा समुदिता वीराः सर्वे वीरपराक्रमाः ॥ ३५
क्षीरं पिबन्तस्तिष्ठन्ति भुञ्जानाः शालितण्डुलान् ।
षष्टिस्तानि सहस्राणि सर्वे विपुलवक्षसः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ ३६
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३७
युधिष्ठिर उवाच ।
ताम्रलोहैः परिवृता निधयो ये चतुःशताः ।
पञ्चद्रौणिक एकैकः सुवर्णस्याहतस्य वै ॥ ३८
जातरूपस्य मुख्यस्य नार्घो यस्य हि भारत ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ ३९
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ४०

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

## षडशीतितमोऽध्यायः ॥ ८६ ॥

विदुरेण धृतराष्ट्रं प्रति दुर्योधननिन्दापूर्वकं द्यूतोपरमचोदनम् ॥ १ ॥

वैशंपायन उवाच ।
एवं प्रवर्तिते द्यूते घोरे सर्वापहारिणि ।
सर्वसंशयनिर्मोक्ता विदुरो वाक्यमब्रवीत् ॥ १
महाराज विजानीहि यत्त्वां वक्ष्यामि भारत ।
मुमूर्षोरौषधमिव न रोचेतापि ते श्रुतम् ॥ २
यद्वै पुरा जातमात्रो रुराव
गोमायुवद्विस्वरं पापचेताः ।
दुर्योधनो भारतानां कुलघ्नः
सोऽयं युक्तो भवतां कालहेतुः ॥ ३
गृहे वसन्तं गोमायुं त्वं वै मोहान्न बुध्यसे ।
दुर्योधनस्य रूपेण शृणु काव्यां गिरं मम ॥ ४
मधु वै माध्विको लब्ध्वा प्रपातं नैव बुध्यते ।
आरुह्य तं मज्जति वा पतनं चाधिगच्छति ॥ ५
सोऽयं मत्तोऽक्षद्यूतेन मधुवन्न परीक्षते ।
प्रपातं बुध्यते नैव वैरं कृत्वा महारथैः ॥ ६
विदितं मे महाप्राज्ञ भोजेष्वेवासमञ्जसम् ।
पुत्रं संत्यक्तवान्पूर्वं पौराणां हितकाम्यया ॥ ७
अन्धका यादवा भोजाः समेताः कंसमत्यजन् ।
नियोगात्तु हते तस्मिन्कृष्णेनामित्रघातिना ॥ ८
एवं ते ज्ञातयः सर्वे मोदमानाः शतं समाः ।
त्वन्नियुक्तः सव्यसाची निगृह्णातु सुयोधनम् ॥ ९
निग्रहादस्य पापस्य मोदन्तां कुरवः सुखम् ।
काकेनेमांश्चित्रबर्हाञ्शार्दूलान्क्रोष्टुकेन च ।
क्रीणीष्व पाण्डवान्राजन्मा मज्जीः शोकसागरे ॥
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ११
सर्वज्ञः सर्वभावज्ञः सर्वशत्रुभयङ्करः ।
इति स्म भाषते काव्यो जम्भत्यागे महाऽसुरान् ॥ १२
हिरण्यष्ठीविनः कांश्चित्पक्षिणो वनगोचरान् ।
गृहे किल कृतावासाँल्लोभाद्राजा न्यपीडयत् ।
स चोपभोगलोभान्धो हिरण्यार्थी परन्तप ॥ १३
आयतिं च तदात्वं च उभे सद्यो व्यनाशयत् ।
तदर्थकामस्तद्वत्त्वं मा द्रुहः पाण्डवान्नृप ॥ १४
मोहात्मा तप्स्यसे पश्चात्पत्रिहा पुरुषो यथा ।
जातंजातं पाण्डवेभ्यः पुष्पमादत्स्व भारत ॥ १५
मालाकार इवारामे स्नेहं कुर्वन्पुनः पुनः ।

---

काव्यां कविना शुक्रेणोक्तां नीतिगिरम् ॥ ४ ॥ माध्विको मधुपण्यवान् । प्रपातं भृगुम् ॥ ५ ॥ नियोगाद्दैवयोगात् ॥ ८ ॥ चित्रबर्हान् मयूरान् ॥ १० ॥ आयतिमुत्तरकालम् । तदात्वं सांप्रतम् । तत्तस्मात् । अर्थकामो धनकामः ॥ १४ ॥ पत्रिहा पक्षिहा

वृक्षानङ्गारकारीव मैनान्धाक्षीः समूलकान् ।
मा गमः ससुतामात्यः सबलश्च यमक्षयम् ॥१६
समवेतान्हि कः पार्थान्प्रतियुध्येत भारत ।
मरुद्भिः सहितो राजन्नपि साक्षान्मरुत्पतिः॥१७
द्यूतं मूलं कलहस्याभ्युपैति
मिथो भेदं महते दारुणाय ।
तदा स्थितोऽयं धृतराष्ट्रस्य पुत्रो
दुर्योधनः सृजते वैरमुग्रम् ॥ १८
प्रातिपेयाः शान्तनवा भीमसेनाः सबाह्लिकाः ।
दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः ॥१९
दुर्योधनो मदेनैष क्षेमं राष्ट्रं व्यपोहति ।
विषाणं गौरिव मदात्स्वयमारुजतेत्मनः ॥ २०
यश्चित्तमन्वेति परस्य राजन्
वीरः कविः स्वामवमत्य दृष्टिम् ।
नावं समुद्र इव बालनेत्रा-
मारुह्य घोरे व्यसने निमज्जेत् ॥ २१
दुर्योधनो ग्लहते पाण्डवेन
प्रीयायसे त्वं जयतीति तच्च ।
अतिनर्मा जायते संप्रहारो
यतो विनाशः समुपैति पुंसाम् ॥ २२
आकर्षस्तेऽवाक्फलः सुप्रणीतो
हृदि प्रौढो मन्त्रपदः समाधिः ।
युधिष्ठिरेण कलहस्तवाय-
मचिन्तितोऽभिमतः स्वबन्धुना ॥ २३
प्रातिपेयाः शान्तनवाः शृणुध्वं
काव्यां वाचं संसदि कौरवाणाम् ।
वैश्वानरं प्रज्वलितं सुघोरं
मा यास्यध्वं मन्दमनुप्रपन्नाः ॥ २४
यदा मन्युं पाण्डवोऽजातशत्रु-
र्न संयच्छेदक्षमदाभिभूतः ।
वृकोदरः सव्यसाची यमौ च
कोऽत्र द्वीपः स्यात्तुमुले वस्तदानीम् ॥२५
महाराज प्रभवस्त्वं धनानां
पुरा द्यूतान्मनसा यावदिच्छेः ।
बहुवित्तान्पाण्डवांश्चेज्जयस्त्वं
किं ते तत्स्याद्वसु विन्देह पार्थान् ॥ २६
जानीमहे देवितं सौबलस्य
वेद द्यूते निकृतिं पार्वतीयः ।
यतः प्राप्तः शकुनिस्तत्र यातु
मा यूयुधो भारत पाण्डवेयान् ॥ २७

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

दुर्योधनेन विदुरोपालम्भः ॥ १ ॥ विदुरेण धृतराष्ट्रस्य हितोपदेशः ॥ २ ॥

दुर्योधन उवाच ।
परेषामेव यशसा श्लाघसे त्वं
सदा क्षत्तः कुत्सयन्धार्तराष्ट्रान् ।
जानीमहे विदुर यत्प्रियस्त्वं
बालानिवास्मानवमन्यसे नित्यमेव ॥ १
स विज्ञेयः पुरुषोऽन्यत्रकामो
निन्दाप्रशंसे हि तथा युनक्ति ।
जिह्वाऽऽत्मनो हृदयस्थं व्यनक्ति
जानीमहे त्वन्मनसः प्रातिकूल्यम् ॥ २
उत्सङ्गे च व्याल इवाहितोऽसि
मार्जारवत्पोषकं चोपहंसि ।
भर्तृघ्नं त्वां न हि पापीय आहु-
स्तस्मात्क्षत्तः किं न बिभेषि पापात् ॥ ३

॥ १५ ॥ बालनेत्रामव्युत्पन्ननेतृकाम् ॥ २१ ॥ ग्लहते पणं करोति । प्रीयायसे अतिशयेन प्रीयसे ॥ २२ ॥ आकर्षो द्यूतम् ॥ २३ ॥ जयः अजयः ॥ २६ ॥ षडशीतितमोऽध्यायः॥८६॥ पापीयः पापीयांसम् ॥ ३ ॥

जित्वा शत्रून्फलमाप्तं महद्वै
माऽस्मान्क्षत्तः परुषाणीह वोचः ।
द्विषद्भिस्त्वं संप्रयोगाभिनन्दी
मुहुर्द्वेषं यासि नः संप्रयोगात् ॥ ४
अमित्रतां याति नरोऽक्षमं ब्रुव-
न्निगूहते गुह्यममित्रसंस्तवे ।
तदाश्रितोऽपत्रप किं नु बाधसे
यदिच्छसि त्वं तदिहाभिभाषसे ॥ ५
मा नोऽवमंस्था विद्म मनस्तवेदं
शिक्षस्व बुद्धिं स्थविराणां सकाशात् ।
यशो रक्षस्व विदुर संप्रणीतं
मा व्यापृतः परकार्येषु भूस्त्वम् ॥ ६
अहं कर्तेति विदुर मा च मंस्था
मा नो नित्यं परुषाणीह वोचः ।
न त्वां पृच्छामि विदुर यद्धितं मे
स्वस्ति क्षत्तर्मा तितिक्षून् क्षिणु त्वम् ॥ ७
एकः शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुशिष्टः प्रवणादिवाम्भो
यथा नियुक्तोऽस्मि तथा भवामि ॥ ८
भिनत्ति शिरसा शैलमहिं भोजयते च यः ।
धीरेव कुरुते तस्य कार्याणामनुशासनम् ।
यो बलादनुशास्तीह सोऽमित्रं तेन विन्दति ॥९
मित्रतामनुवृत्तं तु समुपेक्षत्यपण्डितः ।
प्रदीप्य यः प्रदीप्ताग्निं प्राक्किरं नाभिधावति ।
भस्मापि न स विन्देत शिष्टं क्वचन भारत ॥१०
न वासयेत्पारवर्ग्यं द्विषन्तं
विशेषतः क्षत्तरहितं मनुष्यम् ।
स यत्रेच्छसि विदुर तत्र गच्छ
सुसान्त्विता ह्यसती स्त्री जहाति ॥ ११

विदुर उवाच ।
एतावता पुरुषं ये त्यजन्ति
तेषां सख्यमन्तवद्ब्रूहि राजन् ।
राज्ञां हि चित्तानि परिप्लुतानि
सान्त्वं दत्वा मुसलैर्घातयन्ति ॥ १२
अबालत्वं मन्यसे राजपुत्र
बालोऽहमित्येव सुमन्दबुद्धे ।
यः सौहृदे पुरुषं स्थापयित्वा
पश्चादेनं दूषयते स बालः ॥ १३
न श्रेयसे नीयते मन्दबुद्धिः
स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवं न रोचेद्भरतर्षभस्य
पतिः कुमार्या इव षष्टिवर्षः ॥ १४
अतः प्रियं चेदनुकाङ्क्षसे त्वं
सर्वेषु कार्येषु हिताहितेषु ।
स्त्रियश्च राजञ्जडपङ्गुकांश्च
पृच्छ त्वं वै तादृशांश्चैव सर्वान् ॥ १५
लभ्यते खलु पापीयान्नरोऽनु प्रियवागिह ।
अप्रियस्य हि पथ्यस्य वक्ता श्रोता च दुर्लभः१६
यस्तु धर्मपरश्च स्याद्धित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान्१७
अव्याधिजं कटुजं तीक्ष्णमुष्णं
यशोमुषं परुषं पूतिगन्धिम् ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ १८
वैचित्रवीर्यस्य यशो धनं च
वाञ्छाम्यहं सहपुत्रस्य शश्वत् ।
यथा तथा तेऽस्तु नमश्च तेऽस्तु
ममापि च स्वस्ति दिशन्तु विप्राः ॥ १९
आशीविषान्नेत्रविषान्कोपयेन्न च पण्डितः ।
एवं तेऽहं वदामीदं प्रयतः कुरुनन्दन ॥ २०

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

पारवर्ग्यं शत्रुपक्षजातम् ॥ ११ ॥

सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

सपत्नीभ्रातृकस्य युधिष्ठिरस्य शकुनिना पराजयः ॥ १ ॥

शकुनिरुवाच ।
बहुवित्तं पराजैषीः पाण्डवानां युधिष्ठिर ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ १
युधिष्ठिर उवाच ।
मम वित्तमसङ्ख्येयं यदहं वेद सौबल ।
अथ त्वं शकुने कस्माद्वित्तं समनुपृच्छसि ॥ २
अयुतं प्रयुतं चैव शङ्कुं पद्मं तथार्बुदम् ।
खर्वं शङ्खं निखर्वं च महापद्मं च कोटयः ॥ ३
मध्यं चैव परार्धं च सपरं चात्र पण्यताम् ।
एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ ४
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ५
युधिष्ठिर उवाच ।
गवाश्वं बहुधेनूकमसङ्ख्येयमजाविकम् ।
यत्किंचिदनु पर्णाशां प्राक् सिन्धोरपि सौबल ।
एतन्मम धनं सर्वं तेन दीव्याम्यहं त्वया ॥ ६
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ७
युधिष्ठिर उवाच ।
पुरं जनपदो भूमिरब्राह्मणधनैः सह ।
अब्राह्मणाश्च पुरुषा राजञ्शिष्टं धनं मम ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ ८
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ९
युधिष्ठिर उवाच ।
राजपुत्रा इमे राजञ्छोभन्ते यैर्विभूषिताः ।
कुण्डलानि च निष्काश्च सर्वं राजविभूषणम् ।
एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ १०
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ११
युधिष्ठिर उवाच ।
श्यामो युवा लोहिताक्षः सिंहस्कन्धो महाभुजः ।
नकुलो ग्लह एवैको विद्ध्येतन्मम तद्धनम् ॥ १२
शकुनिरुवाच ।
प्रियस्ते नकुलो राजन्राजपुत्रो युधिष्ठिर ।
अस्माकं वशतां प्राप्तो भूयः केनेह दीव्यसे ॥ १३
वैशंपायन उवाच ।
एवमुक्त्वा तु तानक्षाञ्शकुनिः प्रत्यदीव्यत ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ १४
युधिष्ठिर उवाच ।
अयं धर्मान्सहदेवोऽनुशास्ति
लोके ह्यस्मिन्पण्डिताख्यां गतश्च ।
अनर्हता राजपुत्रेण तेन
दीव्याम्यहं चाप्रियवत्प्रियेण ॥ १५
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ १६
शकुनिरुवाच ।
माद्रीपुत्रौ प्रियौ राजंस्तवेमौ विजितौ मया ।
गरीयांसौ तु ते मन्ये भीमसेनधनञ्जयौ ॥ १७
युधिष्ठिर उवाच ।
अधर्मं चरसे नूनं यो नावेक्षसि वै नयम् ।
यो नः सुमनसां मूढ विभेदं कर्तुमिच्छसि ॥ १८
शकुनिरुवाच ।
गर्ते मत्तः प्रपतते प्रमत्तः स्थाणुमृच्छति ।
ज्येष्ठो राजन्वरिष्ठोऽसि नमस्ते भरतर्षभ ॥ १९
स्वप्ने तानि न दृश्यन्ते जाग्रतो वा युधिष्ठिर ।
कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव ॥ २०

पर्णाशा नदी ॥ ६ ॥

युधिष्ठिर उवाच ।
योनः सङ्ख्ये नौरिव पारनेता
जेता रिपूणां राजपुत्रस्तरस्वी ।
अनर्हता लोकवीरेण तेन
दीव्याम्यहं शकुने फाल्गुनेन ॥ २१
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २२
शकुनिरुवाच ।
अयं मया पाण्डवानां धनुर्धरः
पराजितः पाण्डवः सव्यसाची ।
भीमेन राजन्दयितेन दीव्य
यत्कैतवं पाण्डव तेऽवशिष्टम् ॥ २३
युधिष्ठिर उवाच ।
यो नो नेता यो युधि नः प्रणेता
यथा वज्री दानवशत्रुरेकः ।
तिर्यक्प्रेक्षी संनतभ्रूर्महात्मा
सिंहस्कन्धो यश्च सदाऽत्यमर्षी ॥ २४
बलेन तुल्यो यस्य पुमान्न विद्यते
गदाभृतामग्र्य इहारिमर्दनः ।
अनर्हता राजपुत्रेण तेन
दीव्याम्यहं भीमसेनेन राजन् ॥ २५
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २६
शकुनिरुवाच ।
बहुवित्तं पराजैषीर्भ्रातॄंश्च सहयद्विपान् ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् २७
युधिष्ठिर उवाच ।
अहं विशिष्टः सर्वेषां भ्रातॄणां दयितस्तथा ।
कुर्यामहं जितः कर्म स्वयमात्मन्युपप्लुते ॥ २८
वैशंपायन उवाच ।
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।

कैतवं कितवेभ्य आहर्तव्यं धनम् ॥ २३ ॥

जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २९
शकुनिरुवाच ।
एतत्पापिष्ठमकरोर्यदात्मानं पराजयेः ।
शिष्टे सति धने राजन्पाप आत्मपराजयः ॥ ३०
वैशंपायन उवाच ।
एवमुक्त्वा मताक्षस्तान् ग्लहे सर्वानवस्थितान् ।
पराजयल्लोकवीरानुक्त्वा राज्ञां पृथक् पृथक् ॥ ३१
शकुनिरुवाच ।
अस्ति ते वै प्रिया राजन् ग्लह एकोऽपराजितः ।
पणस्व कृष्णां पाञ्चालीं तयात्मानं पुनर्जय ॥ ३२
युधिष्ठिर उवाच ।
नैव ह्रस्वा न महती न कृशा नातिरोहिणी ।
नीलकुञ्चितकेशी च तया दीव्याम्यहं त्वया ३३
शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया ।
शारदोत्पलसेविन्या रूपेण श्रीसमानया ॥ ३४
तथैव स्यादानृशंस्यात्तथा स्याद्रूपसंपदा ।
तथा स्याच्छीलसंपत्त्या यामिच्छेत्पुरुषः स्त्रियम् ३५
सर्वैर्गुणैर्हि संपन्नामनुकूलां प्रियंवदाम् ।
यादृशीं धर्मकामार्थसिद्धिमिच्छेन्नरः स्त्रियम् ॥ ३६
चरमं संविशति या प्रथमं प्रतिबुध्यते ।
आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥ ३७
आभाति पद्मवद्वक्त्रं सस्वेदं मल्लिकेव च ।
वेदीमध्या दीर्घकेशी ताम्राक्षा नातिलोमशा ३८
तयैवंविधया राजन्पाञ्चाल्याहं सुमध्यया ।
ग्लहं दीव्यामि चार्वङ्ग्या द्रौपद्या हन्त सौबल ३९
वैशंपायन उवाच ।
एवमुक्ते तु वचने धर्मराजेन धीमता ।
धिग्धिगित्येव वृद्धानां सभ्यानां निःसृता गिरः ॥
चुक्षुभे सा सभा राजन्राज्ञां संजज्ञिरे शुचः ।
भीष्मद्रोणकृपादीनां स्वेदश्च समजायत ॥ ४१
शिरो गृहीत्वा विदुरो गतसत्त्व इवाभवत् ।
आस्ते ध्यायन्नधोवक्त्रो निःश्वसन्निव पन्नगः ॥ ४२
'बाह्लीकः सोमदत्तश्च प्रातिपेयश्च संजयः ।

द्रौणिर्भूरिश्रवाश्चैव युयुत्सुर्धृतराष्ट्रजः ।
आसुर्वीक्ष्य त्वधोवक्त्रा निश्वसन्त इवोरगाः' ४३
धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत्पुनः पुनः ।
किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत॥४४
जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः ।
इतरेषां तु सभ्यानां नेत्रेभ्यः प्रापतज्जलम् ॥ ४५
सौबलस्त्वभिधायैवं जितकाशी मदोत्कटः ।
जितमित्येव तानक्षान्पुनरेवान्वपद्यत ॥ ४६

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

दुश्शासनेन द्रौपद्याः सभां प्रत्यानयनम् ॥ १ ॥ द्रौपद्या सभ्यान्प्रति प्रश्नः ॥ २ ॥

दुर्योधन उवाच ।
एहि क्षत्तर्द्रौपदीमानयस्व
प्रियां भार्यां संमतां पाण्डवानाम् ।
संमार्जतां वेश्म परैतु शीघ्रं
तत्रास्तु दासीभिरपुण्यशीला ॥ १
विदुर उवाच ।
दुर्विभाषं भाषितं त्वादृशेन
न मन्द संबुद्ध्यसि पाशबद्धः ।
प्रपाते त्वं लम्बमानो न वेत्सि
व्याघ्रान्मृगः कोपयसेऽतिवेलम् ॥ २
आशीविषास्ते शिरसि पूर्णकोपा महाविषाः ।
मा कोपिष्ठाः सुमन्दात्मन्मा गमस्त्वं यमक्षयम् ३
न हि दासीत्वमापन्ना कृष्णा भवितुमर्हति ।
अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः ॥ ४
अयं धत्ते वेणुरिवात्मघाती
फलं राजा धृतराष्ट्रस्य पुत्रः ।
द्यूतं हि वैराय महाभयाय
मत्तो न बुध्यत्ययमन्तकालम् ॥ ५
नारुन्तुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ ६
समुच्चरन्त्यतिवादाश्च वक्त्रा-
द्यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ ७
अजो हि शस्त्रमगिलत्किलैकः
शस्त्रे विपन्ने शिरसास्य भूमौ ।
निकृन्तनं स्वस्य कण्ठस्य घोरं
तद्वद्वैरं मा कृथाः पाण्डुपुत्रैः ॥ ८
न किंचिदित्थं प्रवदन्ति पार्था
वनेचरं वा गृहमेधिनं वा ।
तपस्विनं वा परिपूर्णविद्यं
भषन्ति हैवं श्वनराः सदैव ॥ ९
द्वारं सुघोरं नरकस्य जिह्मं
न बुध्यते धृतराष्ट्रस्य पुत्रः ।
तमन्वेतारो बहवः कुरूणां
द्यूतोदये सह दुःशासनेन ॥ १०
मज्जन्त्यलाबूनि शिलाः प्लवन्ते
मुह्यन्ति नावोम्भसि शश्वदेव ।
मूढो राजा धृतराष्ट्रस्य पुत्रो
न मे वाचः पथ्यरूपाः शृणोति ॥ ११
अन्तो नूनं भवितायं कुरूणां
सुदारुणः सर्वहरो विनाशः ।
वाचः काव्याः सुहृदां पथ्यरूपा
न श्रूयन्ते वर्धते लोभ एव ॥ १२
वैशंपायन उवाच ।

---

जितकाशी जयशोभी ॥ ४६ ॥

अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

धिगस्तु क्षत्तारमिति ब्रुवाणो
दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः ।
अवैक्षत प्रातिकामीं सभाया-
मुवाच चैनं परमार्यमध्ये ॥ १३

दुर्योधन उवाच ।
त्वं प्रातिकामिन्द्रौपदीमानयस्व
न ते भयं विद्यते पाण्डवेभ्यः ।
क्षत्ता ह्ययं विवदत्येव भीतो
न चास्माकं वृद्धिकामः सदैव ॥ १४

वैशंपायन उवाच ।
एवमुक्तः प्रातिकामी स सूतः
प्रायाच्छीघ्रं राजवचो निशम्य ।
प्रविश्य च श्वेव हि सिंहगोष्ठं
समासदन्महिषीं पाण्डवानाम् ॥ १५

प्रातिकाम्युवाच ।
युधिष्ठिरो द्यूतमदेन मत्तो
दुर्योधनो द्रौपदि त्वामजैषीत् ।
सा त्वं प्रपद्यस्व धृतराष्ट्रस्य वेश्म
नयामि त्वां कर्मणे याज्ञसेनि ॥ १६

द्रौपद्युवाच ।
कथं त्वेवं वदसि प्रातिकामि-
न्को हि दीव्येद्भार्यया राजपुत्रः ।
मूढो राजा द्यूतमदेन मत्तो
ह्यभून्नान्यत्कैतवमस्य किंचित् ॥ १७

प्रातिकाम्युवाच ।
यदा नाभूत्कैतवमन्यदस्य
तदाऽदेवीत्पाण्डवोऽजातशत्रुः ।
न्यस्ताः पूर्वं भ्रातरस्तेन राज्ञा
स्वयं चात्मा त्वमथो राजपुत्रि ॥ १८

द्रौपद्युवाच ।
गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज ।
किं नु पूर्वं पराजैषीरात्मानमथवा नु माम् ॥ १९
एतज्ज्ञात्वा समागच्छ ततो मां नय सूतज ।
ज्ञात्वा चिकीर्षितमहं राज्ञो यास्यामि दुःखिता २०

वैशंपायन उवाच ।
सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा ।
युधिष्ठिरं नरेन्द्राणां मध्ये स्थितमिदं वचः ॥२१
कस्येशो नः पराजैषीरिति त्वामाह द्रौपदी ।
किं नु पूर्वं पराजैषीरात्मानमथवापि माम् ॥२२

वैशंपायन उवाच ।
युधिष्ठिरस्तु निश्चेता गतसत्त्व इवाभवत् ।
न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा ॥२३

दुर्योधन उवाच ।
इहैवागत्य पाञ्चाली प्रश्नमेनं प्रभाषताम् ।
इहैव सर्वे शृण्वन्तु तस्याश्चैतस्य यद्वचः ॥ २४

वैशंपायन उवाच ।
स गत्वा राजभवनं दुर्योधनवशानुगः ।
उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव॥२५
सभ्यास्त्वमी राजपुत्र्याह्वयन्ति
मन्ये प्राप्तः संशयः कौरवाणाम् ।
न वै समृद्धिं पालयते लघीयान्
यस्त्वां सभां नेष्यति राजपुत्रि ॥ २६

द्रौपद्युवाच ।
एवं नूनं व्यदधात्संविधाता
स्पर्शावुभौ स्पृशतो वृद्धबालौ ।
धर्मं त्वेकं परमं प्राह लोके
स नः शमं धास्यति गोप्यमानः ॥ २७
सोऽयं धर्मो मा त्यगात्कौरवान्वै
सभ्यान्गत्वा पृच्छ धर्म्यं वचो मे ।
ते मां ब्रूयुर्निश्चितं तत्करिष्ये
धर्मात्मानो नीतिमन्तो वरिष्ठाः ॥ २८

वैशंपायन उवाच ।
श्रुत्वा सूतस्तद्वचो याज्ञसेन्याः
सभां गत्वा प्राह वाक्यं तदानीम् ।
अधोमुखास्ते न च किंचिदूचु-
र्निर्बन्धं तं धार्तराष्ट्रस्य बुद्ध्वा ॥ २९

कैतवं कितवेभ्यो देयं धनम् ॥ १७ ॥ स्पर्शौ सुखदुःखे वृद्धबालौ स्पृशतः प्राप्नुतः । शमं स्वास्थ्यम् ॥ २७ ॥

युधिष्ठिरस्तु तच्छ्रुत्वा दुर्योधनचिकीर्षितम् ।
द्रौपद्याः संमतं दूतं प्राहिणोद्भरतर्षभ ॥ ३०
एकवस्त्रा त्वधोनीवी रोदमाना रजस्वला ।
सभामागम्य पाञ्चालि श्वशुरस्याग्रतो भव ॥ ३१
अथ त्वामागतां दृष्ट्वा राजपुत्रीं सभां तदा ।
सभ्याः सर्वे विनिन्देरन्मनोभिर्धृतराष्ट्रजम् ॥ ३२

वैशंपायन उवाच ।
स गत्वा त्वरितं दूतः कृष्णाया भवनं नृप ।
न्यवेदयन्मतं धीमान्धर्मराजस्य निश्चितम् ॥ ३३
पाण्डवाश्च महात्मानो दीना दुःखसमन्विताः ।
सत्येनातिपरीताङ्गा नोदीक्षन्ते स्म किंचन ॥ ३४

ततस्त्वेषां मुखमालोक्य राजा
दुर्योधनः सूतमुवाच हृष्टः ।
इहैवैतामानय प्रातिकामिन्
प्रत्यक्षमस्याः कुरवो ब्रुवन्तु ॥ ३५
ततः सूतस्तस्य वशानुगामी
भीतश्च कोपाद्द्रुपदात्मजायाः ।
विहाय मानं पुनरेव सभ्या-
नुवाच कृष्णां किमहं ब्रवीमि ॥ ३६

दुर्योधन उवाच ।
दुःशासनैष मम सूतपुत्रो
वृकोदरादुद्विजतेऽल्पचेताः ।
स्वयं प्रगृह्यानय याज्ञसेनीं
किं ते करिष्यन्त्यवशाः सपत्नाः ॥ ३७

वैशंपायन उवाच ।
ततः समुत्थाय स राजपुत्रः
श्रुत्वा भ्रातुः शासनं रक्तदृष्टिः ।
प्रविश्य तद्वेश्म महारथाना-
मित्यब्रवीद्द्रौपदीं राजपुत्रीम् ॥ ३८
एह्येहि पाञ्चालि जितासि कृष्णे
दुर्योधनं पश्य विमुक्तलज्जा ।
कुरून्भजस्वायतपत्रनेत्रे
धर्मेण लब्धासि सभां परैहि ॥ ३९

ततः समुत्थाय सुदुर्मनाः सा
विवर्णमामृज्य मुखं करेण ।
आर्ता प्रदुद्राव यतः स्त्रियस्ता
वृद्धस्य राज्ञः कुरुपुङ्गवस्य ॥ ४०
ततो जवेनाभिससार रोषा-
द्दुःशासनस्तामभिगर्जमानः ।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु
जग्राह केशेषु नरेन्द्रपत्नीम् ॥ ४१
ये राजसूयावभृथे जलेन
महाक्रतौ मन्त्रपूतेन सिक्ताः ।
ते पाण्डवानां परिभूय वीर्यं
बलात्प्रमृष्टा धृतराष्ट्रजेन ॥ ४२
स तां पराकृष्य सभासमीप-
मानीय कृष्णामतिदीर्घकेशीम् ।
दुःशासनो नाथवतीमनाथव-
च्चकर्ष वायुः कदलीमिवार्ताम् ॥ ४३
सा कृष्यमाणा नमिताङ्गयष्टिः
शनैरुवाचाथ रजस्वलाऽस्मि ।
एकं च वासो मम मन्दबुद्धे
सभां नेतुं नार्हसि मामनार्य ॥ ४४
ततोऽब्रवीत्तां प्रसभं निगृह्य
केशेषु कृष्णेषु तदा स कृष्णाम् ।
कृष्णं च जिष्णुं च हरिं नरं च
त्राणाय विक्रोशति याज्ञसेनि ॥ ४५
रजस्वला वा भव याज्ञसेनि
एकाम्बरा वाप्यथवा विवस्त्रा ।
द्यूते जिता चासि कृतासि दासी
दासीषु वासश्च यथोपजोषम् ॥ ४६

वैशंपायन उवाच ।
प्रकीर्णकेशी पतितार्धवस्त्रा
दुःशासनेन व्यवधूयमाना ।
ह्रीमत्यमर्षेण च दह्यमाना
शनैरिदं वाक्यमुवाच कृष्णा ॥ ४७

ऊर्मिमत्सु प्रवहन्नदीजलवन्निम्नोन्नतेषु ॥ ४१ ॥

द्रौपद्युवाच ।

इमे सभायामुपनीतशास्त्राः
क्रियावन्तः सर्व एवेन्द्रकल्पाः ।
गुरुस्थाना गुरवश्चैव सर्वे
तेषामग्रे नोत्सहे स्थातुमेवम् ॥ ४८
नृशंसकर्मंस्त्वमनार्यवृत्त
मा मा विवस्त्रां कुरु मा विकार्षीः ।
न मर्षयेयुस्तव राजपुत्राः
सेन्द्रापि देवा यदि ते सहायाः ॥ ४९
धर्मे स्थितो धर्मसुतो महात्मा
धर्मश्च सूक्ष्मो निपुणोपलक्ष्यः ।
वाचापि भर्तुः परमाणुमात्र-
मिच्छामि दोषं न गुणान्विसृज्य ॥ ५०
इदं त्वकार्यं कुरुवीरमध्ये
रजस्वलां यत्परिकर्षसे माम् ।
न चापि कश्चित्कुरुतेऽत्र कुत्सां
ध्रुवं तवेदं मतमभ्युपेतः ॥ ५१
धिगस्तु नष्टः खलु भारतानां
धर्मस्तथा क्षत्रविदां च वृत्तम् ।
यत्र ह्यतीतां कुरुधर्मवेलां
प्रेक्षन्ति सर्वे कुरवः सभायाम् ॥ ५२
द्रोणस्य भीष्मस्य च नास्ति सत्त्वं
क्षत्तुस्तथैवास्य महात्मनोपि ।
राज्ञस्तथाहीममधर्ममुग्रं
न लक्षयन्ते कुरुवृद्धमुख्याः ॥ ५३

वैशंपायन उवाच ।

तथा ब्रुवन्ती करुणं सुमध्यमा
भर्तॄन्कटाक्षैः कुपितानपश्यत् ।
सा पाण्डवान्कोपपरीतदेहा-
न्सन्दीपयामास कटाक्षपातैः ॥ ५४
हृतेन राज्येन तथा धनेन
रत्नैश्च मुख्यैर्न तथा बभूव ।
यथा त्रपाकोपसमीरितेन
कृष्णाकटाक्षेण बभूव दुःखम् ॥ ५५
दुःशासनश्चापि समीक्ष्य कृष्णा-
मवेक्षमाणां कृपणान्पतींस्तान् ।
आधूय वेगेन विसंज्ञकल्पा-
मुवाच दासीति हसन्सशब्दम् ॥ ५६
कर्णस्तु तद्वाक्यमतीव हृष्टः
संपूजयामास हसन्सशब्दम् ।
गान्धारराजः सुबलस्य पुत्र-
स्तथैव दुःशासनमभ्यनन्दत् ॥ ५७
सभ्यास्तु ये तत्र बभूवुरन्ये
ताभ्यामृते धार्तराष्ट्रेण चैव ।
तेषामभूद्दुःखमतीव कृष्णां
दृष्ट्वा सभायां परिकृष्यमाणाम् ॥ ५८

भीष्म उवाच ।

न धर्मसौक्ष्म्यात्सुभगे विवेक्तुं
शक्नोमि ते प्रश्नमिमं यथावत् ।
अस्वाम्यशक्तः पणितुं परस्वं
स्त्रियाश्च भर्तुर्वशतां समीक्ष्य ॥ ५९
त्यजेत सर्वां पृथिवीं समृद्धां
युधिष्ठिरो धर्ममथो न जह्यात् ।
उक्तं जितोऽस्मीति च पाण्डवेन
तस्मान्न शक्नोमि विवेक्तुमेतत् ॥ ६०
द्यूतेऽद्वितीयः शकुनिर्नरेषु
कुन्तीसुतस्तेन निसृष्टकामः ।
न मन्यते तां निकृतिं युधिष्ठिर-
स्तस्मान्न ते प्रश्नमिमं ब्रवीमि ॥ ६१

द्रौपद्युवाच ।

आहूय राजा कुशलैरनार्यै-
र्दुष्टात्मभिर्नैकृतिकैः सभायाम् ।
द्यूतप्रियैर्नातिकृतप्रयत्नः
कस्मादयं नाम निसृष्टकामः ॥ ६२
अशुद्धभावैर्निकृतिप्रवृत्तै-
रबुध्यमानः कुरुपाण्डवाग्र्यः ।
संभूय सर्वैश्च जितोऽपि यस्मा-
त्पश्चादयं कैतवमभ्युपेतः ॥ ६३

सेन्द्रापि सेन्द्रा अपि ॥ ४९ ॥

तिष्ठन्ति चेमे कुरवः सभाया-
मीशाः सुतानां च तथा स्नुषाणाम् ।
समीक्ष्य सर्वे मम चापि वाक्यं
विब्रूत मे प्रश्नमिमं यथावत् ॥ ६४
न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥ ६५

वैशंपायन उवाच ।
तथा ब्रुवन्तीं करुणं रुदन्ती-
मवेक्षमाणां कृपणान्पतींस्तान् ।
दुःशासनः परुषाण्यप्रियाणि
वाक्यान्युवाचामधुराणि चैव ॥ ६६
तां कृष्यमाणां च रजस्वलां च
स्रस्तोत्तरीयामतदर्हमाणाम् ।
वृकोदरः प्रेक्ष्य युधिष्ठिरं च
चकार कोपं परमार्तरूपः ॥ ६७

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

## नवतितमोऽध्यायः ॥ ९० ॥

भीमवचनम् ॥ १ ॥ विकर्णवचनम् ॥ २ ॥ दुःशासनेन द्रौपदीवस्त्रापहारः ॥ ३ ॥ श्रीकृष्णप्रसादात् द्रौपद्याः वस्त्रराशिप्रादुर्भावः ॥ ४ ॥ विदुरवचनम् ॥ ५ ॥

भीम उवाच ।
भवन्ति गेहे बन्धक्यः कितवानां युधिष्ठिर ।
न ताभिरुत दीव्यन्ति दया चैवास्ति तास्वपि ॥ १
काश्यो यद्धनमाहार्षीद्द्रव्यं यच्चान्यदुत्तमम् ।
तथाऽन्ये पृथिवीपाला यानि रत्नान्युपाहरन् ॥ २
वाहनानि धनं चैव कवचान्यायुधानि च ।
राज्यमात्मा वयं चैव कैतवेन हृतं परैः ॥ ३
न च मे तत्र कोपोऽभूत्सर्वस्येशो हि नो भवान् ।
इमं त्वतिक्रमं मन्ये द्रौपदी यत्र पण्यते ॥ ४
एषा ह्यनर्हती बाला पाण्डवान्प्राप्य कौरवैः ।
त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैरकृतात्मभिः ॥ ५
अस्याः कृते मन्युरयं त्वयि राजन्निपात्यते ।
बाहू ते संप्रधक्ष्यामि सहदेवाग्निमानय ॥ ६
अर्जुन उवाच ।
न पुरा भीमसेन त्वमीदृशीर्वदिता गिरः ।
परैस्ते नाशितं नूनं नृशंसैर्धर्मगौरवम् ॥ ७
न सकामाः परे कार्या धर्ममेवाचरोत्तमम् ।
भ्रातरं धार्मिकं ज्येष्ठं कोऽतिवर्तितुमर्हति ॥ ८

आहूतो हि परै राजा क्षात्रं व्रतमनुस्मरन् ।
दीव्यते परकामेन तन्नः कीर्तिकरं महत् ॥ ९
भीमसेन उवाच ।
एवमस्मिन्कृतं विद्यां यदि नाहं धनञ्जय ।
दीप्तेऽग्नौ सहितौ बाहू निर्दहेयं बलादिव ॥ १०
वैशंपायन उवाच ।
तथा तान्दुःखितान्दृष्ट्वा पाण्डवान्धृतराष्ट्रजः ।
कृष्यमाणां च पाञ्चालीं विकर्ण इदमब्रवीत् ॥ ११
याज्ञसेन्या यदुक्तं तद्वाक्यं विब्रूत पार्थिवाः ।
अविवेकेन वाक्यस्य नरकः सद्य एव नः ॥ १२
भीष्मश्च धृतराष्ट्रश्च कुरुवृद्धतमावुभौ ।
समेत्य नाहतुः किंचिद्विदुरश्च महामतिः ॥ १३
भारद्वाजश्च सर्वेषामाचार्यः कृप एव च ।
कुत एतावपि प्रश्नं नाहतुर्द्विजसत्तमौ ॥ १४
ये त्वन्ये पृथिवीपालाः समेताः सर्वतोदिशम् ।
कामक्रोधौ समुत्सृज्य ते ब्रुवन्तु यथामति ॥ १५
यदिदं द्रौपदी वाक्यमुक्तवत्यसकृच्छुभा ।
विमृश्य कस्य कः पक्षः पार्थिवा वदतोत्तरम् ॥ १६

---

विब्रूत विस्पष्टं ब्रूत नतु भीष्मवत्संदिग्धमिति भावः ॥ ६४॥

एकोननवतितमोऽध्यायः ॥ ८९ ॥

वैशंपायन उवाच।

एवं स बहुशः सर्वानुक्तवांस्तान्सभासदः।
न च ते पृथिवीपालास्तमूचुः साध्वसाधु वा १७
उक्त्वाऽसकृत्तथा सर्वान्विकर्णः पृथिवीपतीन्।
पाणौ पाणिं विनिष्पिष्य निःश्वसन्निदमब्रवीत् १८
विब्रूत पृथिवीपाला वाक्यं मा वा कथञ्चन।
मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः १९
चत्वार्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम्।
मृगयां पानमक्षांश्च ग्राम्ये चैवातिरक्तताम्॥ २०
एतेषु हि नरः सक्तो धर्ममुत्सृज्य वर्तते।
यथाऽयुक्तेन च कृतां क्रियां लोको न मन्यते २१
तथेयं पाण्डुपुत्रेण व्यसने वर्तता भृशम्।
समाहूतेन कितवैरास्थितो द्रौपदीपणः॥ २२
साधारणी च सर्वेषां पाण्डवानामनिन्दिता।
जितेन पूर्वं चानेन पाण्डवेन कृतः पणः॥ २३
इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना।
एतत्सर्वं विचार्याहं मन्ये न विजितामिमाम् २४

वैशंपायन उवाच।

एतच्छ्रुत्वा महान्नादः सभ्यानामुदतिष्ठत।
विकर्णं शंसमानानां सौबलं चापि निन्दताम् २५
तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्छितः।
प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत्॥ २६

कर्ण उवाच।

दृश्यन्ते वै विकर्णेह वैकृतानि बहून्यपि।
तज्जातस्तद्विनाशाय यथाऽग्निररणिप्रजः॥ २७
एते न किंचिदप्याहुश्चोदिता ह्यपि कृष्णया।
धर्मेण विजितामेतां मन्यन्ते द्रुपदात्मजाम्॥२८
त्वं तु केवलबाल्येन धार्तराष्ट्र विदीर्यसे।
यद्ब्रवीषि सभामध्ये बालः स्थविरभाषितम्॥२९
न च धर्मं यथावत्त्वं वेत्सि दुर्योधनावर।
यद्ब्रवीषि जितां कृष्णां न जितेति सुमन्दधीः ३०
कथं ह्यविजितां कृष्णां मन्यसे धृतराष्ट्रज।
यदा सभायां सर्वस्वं न्यस्तवान्पाण्डवाग्रजः॥३१
अभ्यन्तरा च सर्वस्वे द्रौपदी भरतर्षभ।
एवं धर्मजितां कृष्णां मन्यसे न जितां कथम् ३२
कीर्तिता द्रौपदी वाचा अनुज्ञाता च पाण्डवैः।
भवत्यविजिता केन हेतुनैषा मता तव॥ ३३
मन्यसे वा सभामेतामानीतामेकवाससम्।
अधर्मेणेति तत्रापि शृणु मे वाक्यमुत्तमम्॥ ३४
एको भर्ता स्त्रिया देवैर्विहितः कुरुनन्दन।
इयं त्वनेकवशगा बन्धकीति विनिश्चिता॥ ३५
अस्याः सभामानयनं न चित्रमिति मे मतिः।
एकाम्बरधरत्वं वाऽप्यथवाऽपि विवस्त्रता॥ ३६
यच्चैषां द्रविणं किंचिद्या चैषा ये च पाण्डवाः।
सौबलेनेह तत्सर्वं धर्मेण विजितं वसु॥ ३७
दुःशासन सुबालोऽयं विकर्णः प्राज्ञवादिकः।
पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर॥३८

वैशंपायन उवाच।

तच्छ्रुत्वा पाण्डवाः सर्वे स्वानि वासांसि भारत।
अवकीर्योत्तरीयाणि सभायां समुपाविशन्॥ ३९
ततो दुःशासनो राजन्द्रौपद्या वसनं बलात्।
सभामध्ये समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे॥ ४०
'आकृष्यमाणे वसने विललाप सुदुःखिता।
ज्ञातं मया वसिष्ठेन पुरा गीतं महात्मना॥ ४१
महत्यापदि संप्राप्ते स्मर्तव्यो भगवान्हरिः।
इति निश्चित्य मनसा शरणागतवत्सलम्।
आकृष्यमाणे वसने द्रौपदी कृष्णमस्मरत्॥ ४२
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागताम्॥४३
हा कृष्ण द्वारकावासिन्कासि यादवनन्दन।
इमामवस्थां संप्राप्तामनाथां किमुपेक्षसे॥ ४४
गोविन्द द्वारकावासिन्कृष्ण गोपीजनप्रिय।
कौरवैः परिभूतां मां किं न जानासि केशव' ४५
हे नाथ हे रमानाथ व्रजनाथार्तिनाशन।

ग्राम्ये स्त्रीभोगे॥ २०॥ आकृष्यमाणे वसने द्रौपद्या चिन्तितो हरिः। गोविन्द द्वारकावासिन्कृष्ण गोपीजनप्रिय। कौरवैः परिभूतां मां किं न जानासि केशव। इति झ. पाठः॥ ४१॥

कौरवार्णवमग्नां मामुद्धरस्व जनार्दन ॥ ४६
कृष्णकृष्ण महायोगिन्विश्वात्मन्विश्वभावन ।
प्रपन्नां पाहि गोविन्द कुरुमध्येऽवसीदतीम् ४७
इत्यनुस्मृत्य कृष्णं सा हरिं त्रिभुवनेश्वरम् ।
प्रारुदद्दुःखिता राजन्मुखमाच्छाद्य भामिनी॥४८
तस्य प्रसादाद्द्रौपद्याः कृष्यमाणेऽम्बरे तदा ।
तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ॥ ४९
नानारागविरागाणि वसनान्यथ वै प्रभो ।
प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् ॥ ५०
ततो हलहलाशब्दस्तत्रासीद्घोरदर्शनः ।
तदद्भुततमं लोके वीक्ष्य सर्वे महीभृतः ॥ ५१
शशंसुर्द्रौपदीं तत्र कुत्सन्तो धृतराष्ट्रजम् ।
'धिग्धिगित्यशिवां वाचमुत्सृजन्कौरवान्प्रति॥५२
यदा तु वाससां राशिः सभामध्ये समाचितः ।'
तदा दुःशासनः श्रान्तो व्रीडितः समुपाविशत् ५३
शशाप तत्र भीमस्तु राजमध्ये बृहत्स्वनः ।
क्रोधाद्विस्फुरमाणौष्ठो विनिष्पिष्य करे करम् ५४
भीम उवाच ।
इदं मे वाक्यमादध्वं क्षत्रिया लोकवासिनः ।
नोक्तपूर्वं नरैरन्यैर्न चान्यो यद्वदिष्यति ॥ ५५
यद्येतदेवमुक्त्वाऽहं न कुर्यां पृथिवीश्वराः ।
पितामहानां पूर्वेषां नाहं गतिमवाप्नुयाम् ॥ ५६
अस्य पापस्य दुर्बुद्धेर्भारतापसदस्य च ।
न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ॥५७
वैशंपायन उवाच ।
तस्य ते तद्वचः श्रुत्वा रौद्रं लोमप्रहर्षणम् ।
प्रचक्रुर्बहुलां पूजां कुत्सन्तो धृतराष्ट्रजम् ॥ ५८
न विब्रुवन्ति कौरव्याः प्रश्नमेतमिति स्म ह ।
सुजनः क्रोशति स्मात्र धृतराष्ट्रं विगर्हयन् ॥ ५९
ततो बाहू समुत्क्षिप्य निवार्य च सभासदः ।
विदुरः सर्वधर्मज्ञ इदं वचनमब्रवीत् ॥ ६०
विदुर उवाच ।
द्रौपदी प्रश्नमुक्त्वैवं रोरवीति त्वनाथवत् ।
न च विब्रूत तं प्रश्नं सभ्या धर्मोऽत्र पीड्यते॥६१
सभां प्रपद्यते प्रश्नः प्रज्वलन्निव हव्यवाट् ।
तं वै सत्येन धर्मेण सभ्याः प्रशमयन्त्युत ॥ ६२
धर्म्यं प्रश्नमतो ब्रूयादार्यः सत्येन मानवः ।
विब्रूयुस्तत्र तं प्रश्नं कामक्रोधबलातिगाः ॥ ६३
विकर्णेन यथाप्रज्ञमुक्तः प्रश्नो नराधिपाः ।
भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति ॥६४
यो हि प्रश्नं न विब्रूयाद्धर्मदर्शी सभां गतः ।
अनृते या फलावाप्तिस्तस्याः सोऽर्धं समश्नुते॥६५
यः पुनर्वितथं ब्रूयाद्धर्मदर्शी सभां गतः ।
अनृतस्य फलं कृत्स्नं स प्राप्नोतीति निश्चयः॥६६
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च ॥ ६७
प्रह्लादो नाम दैत्येन्द्रस्तस्य पुत्रो विरोचनः ।
कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत् ॥ ६८
अहं ज्यायानहं ज्यायानिति कन्येप्सया तदा ।
तयोर्देवनमत्रासीत्प्राणयोरिति नः श्रुतम् ॥ ६९
तयोः प्रश्नविवादोऽभूत्प्रह्लादं तावपृच्छताम् ।
ज्यायान्क आवयोरेकः प्रश्नं प्रब्रूहि मा मृषा॥७०
स वै विवदनाद्भीतः सुधन्वानं विलोकयन् ।
तं सुधन्वाब्रवीत्क्रुद्धो ब्रह्मदण्ड इव ज्वलन् ॥७१
यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि ।
शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति ॥ ७२
सुधन्वना तथोक्तः सन्व्यथितोऽश्वत्थपर्णवत् ।
जगाम कश्यपं दैत्यः परिप्रष्टुं महौजसम् ॥ ७३
प्रह्लाद उवाच ।
त्वं वै धर्मस्य विज्ञाता दैवस्येहासुरस्य च ।
ब्राह्मणस्य महाभाग धर्मकृच्छ्रमिदं शृणु ॥ ७४
यो वै प्रश्नं न विब्रूयाद्वितथं चैव निर्दिशेत् ।
के वै तस्य परे लोकास्तन्ममाचक्ष्व पृच्छतः॥७५
कश्यप उवाच ।
जानन्नविब्रुवन्प्रश्नान्कामात्क्रोधाद्भयात्तथा ।
सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥ ७६
साक्षी वा विब्रुवन्साक्ष्यं गोकर्णशिथिलश्चरन् ।
सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥ ७७

गोकर्णशिथिल उभयपक्षस्पर्शी ॥ ७७ ॥

तस्य संवत्सरे पूर्णे पाश एकः प्रमुच्यते ।
तस्मात्सत्यं तु वक्तव्यं जानता सत्यमञ्जसा॥७८
विद्धो धर्मो ह्यधर्मेण सभां यत्रोपपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ७९
अर्धं हरति वै श्रेष्ठः पादो भवति कर्तृषु ।
पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितम्८०
अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ८१
वितथं तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते ।
इष्टापूर्ते च ते घ्नन्ति सप्तसप्त परावरान् ॥ ८२
हृतस्वस्य हि यद्दुःखं हतपुत्रस्य चैव यत् ।
ऋणिनः प्रति यच्चैव स्वार्थाद्भ्रष्टस्य चैव यत्॥८३
स्त्रियाः पत्या विहीनाया राज्ञा ग्रस्तस्य चैव यत्।
अपुत्रायाश्च यद्दुःखं व्याघ्राघ्रातस्य चैव यत्॥८४
अध्यूढायाश्च यद्दुःखं साक्षिभिर्विहतस्य च ।
एतानि वै समान्याहुर्दुःखानि त्रिदिवेश्वराः॥८५
तानि सर्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन् ।
समक्षदर्शनात्साक्षी श्रवणाच्चेति धारणात् ॥ ८६
तस्मात्सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यां न हीयते ।
कश्यपस्य वचः श्रुत्वा प्रह्लादः पुत्रमब्रवीत् ॥८७
श्रेयान्सुधन्वा त्वत्तो वै मत्तः श्रेयांस्तथाङ्गिराः ।
माता सुधन्वनश्चापि मातृतः श्रेयसी तव ।
विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ॥ ८८
सुधन्वोवाच ।
पुत्रस्नेहं परित्यज्य यस्त्वं धर्मे व्यवस्थितः ।
अनुजानामि ते पुत्रं जीवत्वेष शतं समाः ॥८९
विदुर उवाच ।
एवं वै परमं धर्मं श्रुत्वा सर्वे सभासदः ।
यथाप्रश्नं तु कृष्णाया मन्यध्वं तत्र किं परम्॥९०
वैशंपायन उवाच ।
विदुरस्य वचः श्रुत्वा नोचुः किंचन पार्थिवाः ।
कर्णो दुःशासनं त्वाह कृष्णां दासीं गृहान्नय॥९१
तां वेपमानां सव्रीडां प्रलपन्तीं स पाण्डवान् ।
दुःशासनः सभामध्ये विचकर्ष तपस्विनीम् ॥९२

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

---

## एकनवतितमोऽध्यायः ॥ ९१ ॥

द्रौपदीवचनम् ॥ १ ॥ युधिष्ठिरेणैव द्रौपदीप्रश्नस्योत्तरं वक्तव्यमिति भीष्मवचनम् ॥ २ ॥

द्रौपद्युवाच ।
पुरस्तात्करणीयं मे न कृतं कार्यमुत्तरम् ।
विह्वलाऽस्मि कृताऽनेन कर्षता बलिना बलात्॥१
अभिवादं करोम्येषां कुरूणां कुरुसंसदि ।
न मे स्यादपराधोऽयं तदिदं न कृतं मया ॥ २
वैशंपायन उवाच ।
सा तेन च समाधूता दुःखेन च तपस्विनी ।
पतिता विललापेदं सभायामतथोचिता ॥ ३
द्रौपद्युवाच ।
स्वयंवरे यास्मि नृपैर्दृष्टा रङ्गे समागतैः ।
न दृष्टपूर्वा चान्यत्र साऽहमद्य सभां गता ॥ ४
यां न वायुर्न चादित्यो दृष्टवन्तौ पुरा गृहे ।
साऽहमद्य सभामध्ये दृष्टास्मि जनसंसदि ॥ ५
यां न मृष्यन्ति वातेन स्पृश्यमानां गृहे पुरा ।
स्पृश्यमानां सहन्तेऽद्य पाण्डवास्तां दुरात्मना ॥ ६
मृष्यन्ति कुरवश्चेमे मन्ये कालस्य पर्ययम् ।
स्नुषां दुहितरं चैव क्लिश्यमानामनर्हतीम् ॥ ७
किन्न्वतः कृपणं भूयो यदहं स्त्री सती शुभा ।
सभामध्यं विगाहेऽद्य क्व नु धर्मो महीक्षिताम् ८
धर्म्यां स्त्रियं सभां पूर्वे न नयन्तीति नः श्रुतम्।
स नष्टः कौरवेयेषु पूर्वो धर्मः सनातनः ॥ ९
कथं हि भार्या पाण्डूनां पार्षतस्य स्वसा सती ।

अध्यूढायाः कृतसपत्नीकायाः ॥ ८५ ॥

नवतितमोऽध्यायः ॥ ९० ॥

वासुदेवस्य च सखी पार्थिवानां सभामियाम् १०
तामिमां धर्मराजस्य भार्यां सदृशवर्णजाम् ।
ब्रूत दासीमदासीं वा तत्करिष्यामि कौरवाः ११
अयं मां सुदृढं क्षुद्रः कौरवाणां यशोहरः ।
क्लिश्नाति नाहं तत्सोढुं चिरं शक्ष्यामि कौरवाः १२
जितां वाऽप्यजितां वापि मन्यध्वं मां यथा नृपाः ।
तथा प्रत्युक्तमिच्छामि तत्करिष्यामि कौरवाः १३
भीष्म उवाच ।
उक्तवानस्मि कल्याणि धर्मस्य परमा गतिः ।
लोके न शक्यते ज्ञातुमपि विज्ञैर्महात्मभिः ॥१४
बलवांश्च यथा धर्मं लोके पश्यति पूरुषः ॥
स धर्मो धर्मवेलायां भवत्यभिहतः परः ॥ १५
न विवेक्तुं च ते प्रश्नमिमं शक्नोमि निश्चयात् ।
सूक्ष्मत्वाद्गहनत्वाच्च कार्यस्यास्य च गौरवात् ॥१६
नूनमन्तः कुलस्यास्य भविता न चिरादिव ।
तथा हि कुरवः सर्वे लोभमोहपरायणाः ॥ १७
कुलेषु जाताः कल्याणि व्यसनैराहता भृशम् ।
धर्म्यान्मार्गान्न च्यवन्ते येषां नस्त्वं वधूः स्थिता ॥
उपपन्नं च पाञ्चालि तवेदं वृत्तमीदृशम् ।
यत्कृच्छ्रमपि संप्राप्ता धर्ममेवान्ववेक्षसे ॥ १९
एते द्रोणादयश्चैव वृद्धा धर्मविदो जनाः ।
शून्यैः शरीरैस्तिष्ठन्ति गतासव इवानताः ॥ २०
युधिष्ठिरस्तु प्रश्नेऽस्मिन्प्रमाणमिति मे मतिः ।
अजितां वा जितां वेति स्वयं व्याख्यातुमर्हति ॥२१

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

दुर्योधनवचनम् ॥ १ ॥ दुर्योधनेन द्रौपदीं प्रति निजोरौ प्रदर्शिते भीमेन तद्भंदनप्रतिज्ञा ॥ २ ॥ अर्जुनादिभिः कर्णादिहननप्रतिज्ञा ॥ ३ ॥ द्रौपद्या दुर्योधनादीनां शापदानसमये अन्तरिक्षात्पुष्पवृष्टिः ॥ ४ ॥

वैशंपायन उवाच ।
तथा तु दृष्ट्वा बहु तत्र देवीं
रोरूयमाणां कुररीमिवार्ताम् ।
नोचुर्वचः साध्वथवाऽप्यसाधु
महीक्षितो धार्तराष्ट्रस्य भीताः ॥ १
दृष्ट्वा तथा पार्थिवपुत्रपौत्रां-
स्तूष्णींभूतान्धृतराष्ट्रस्य पुत्रः ।
स्मयन्निवेदं वचनं बभाषे
पाञ्चालराजस्य सुतां तदानीम् ॥ २
दुर्योधन उवाच ।
तिष्ठत्वयं प्रश्न उदारसत्त्वे
भीमेऽर्जुने सहदेवे तथैव ।
पत्यौ च ते नकुले याज्ञसेनि
वदन्त्वेते वचनं त्वत्प्रसूतम् ॥ ३
अनीश्वरं विब्रुवन्त्वार्यमध्ये
युधिष्ठिरं तव पाञ्चालि हेतोः ।
कुर्वन्तु सर्वे चानृतं धर्मराजं
पाञ्चालि त्वं मोक्ष्यसे दासभावात् ॥ ४
धर्मे स्थितो धर्मसुतो महात्मा
स्वयं चेदं कथयत्विन्द्रकल्पः ।
ईशो वा ते ह्यनीशोऽथवैष
वाक्यादस्य क्षिप्रमेकं भजस्व ॥ ५
सर्वे हीमे कौरवेयाः सभायां
दुःखान्तरे वर्तमानास्तवैव ।
न विब्रुवन्त्यार्यसत्वा यथाव-
त्पतींश्च ते समवेक्ष्याल्पभाग्यान् ॥ ६
वैशंपायन उवाच ।
ततः सभ्याः कुरुराजस्य तस्य
वाक्यं सर्वे प्रशशंसुस्तथोच्चैः ।
चेलावेधांश्चापि चक्रुर्नदन्तो
हाहेत्यासीदपि चैवार्तनादः ॥ ७
श्रुत्वा तु तद्वाक्यमनोहरं त-
द्धर्षश्चासीत्कौरवाणां सभायाम् ।

सर्वे चासन्पार्थिवाः प्रीतिमन्तः
कुरुश्रेष्ठं धार्मिकं पूजयन्तः ॥ ८
युधिष्ठिरं च ते सर्वे समुदैक्षन्त पार्थिवाः ।
किं नु वक्ष्यति धर्मज्ञ इति साचीकृताननाः ॥ ९
किं नु वक्ष्यति बीभत्सुरजितो युधि पाण्डवः ।
भीमसेनो यमौ चोभौ भृशं कौतूहलान्विताः ॥ १०
तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदम् ।
प्रगृह्य रुचिरं दिव्यं भुजं चन्दनचर्चितम् ॥ ११
यद्येष गुरुरस्माकं धर्मराजो महामनाः ।
न प्रभुः स्यात्कुलस्यास्य न वयं मर्षयेमहि ॥ १२
ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः ।
मन्यते जितमात्मानं यद्येष विजिता वयम् ॥ १३
न हि मुच्येत मे जीवन्पदा भूमिमुपस्पृशन् ।
मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्धजानिमान् १४
पश्यध्वं ह्यायतौ वृत्तौ भुजौ मे परिघाविव ।
नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः ॥ १५
धर्मपाशसितस्त्वेवमधिगच्छामि सङ्कटम् ।
गौरवेण निरुद्धश्च निग्रहादर्जुनस्य च ॥ १६
धर्मराजनिसृष्टस्तु सिंहः क्षुद्रमृगानिव ।
धार्तराष्ट्रानिमान्पापान्निष्पिषेयं तलासिभिः १७
वैशंपायन उवाच ।
तमुवाच तदा भीष्मो द्रोणो विदुर एव च ।
क्षम्यतामिदमित्येवं सर्वं संभाव्यते त्वयि ॥ १८
कर्ण उवाच ।
त्रयः किलेमे ह्यधना भवन्ति
दासः पुत्रश्चास्वतन्त्रा च नारी ।
दासस्य पत्नी त्वधनस्य भद्रे
हीनेश्वरा दासधनं च सर्वम् ॥ १९
प्रविश्य राज्ञः परिवारं भजस्व
तत्ते कार्यं शिष्टमादिश्यतेऽत्र ।
ईशास्तु सर्वे तव राजपुत्रि
भवन्ति वै धार्तराष्ट्रा न पार्थाः ॥ २०
अन्यं वृणीष्व पतिमाशु भामिनि
यस्माद्दास्यं न लभसि देवनेन ।
अवाच्या वै पतिषु कामवृत्ति-
र्नित्यं दास्ये विदितं तत्तवास्तु ॥ २१
पराजितो नकुलो भीमसेनो
युधिष्ठिरः सहदेवार्जुनौ च ।
दासीभूता त्वं हि वै याज्ञसेनि
पराजितास्ते पतयो नैव सन्ति ॥ २२
प्रयोजनं जन्मनि किं न मन्यते
पराक्रमं पौरुषं चैव पार्थः ।
पाञ्चाल्यस्य द्रुपदस्यात्मजामिमां
सभामध्ये यो व्यदेवीद्ग्लहेषु ॥ २३
वैशंपायन उवाच ।
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी
भृशं निशश्वास तदाऽऽर्तरूपः ।
राजानुगो धर्मपाशानुबद्धो
दहन्निवैनं क्रोधसंरक्तदृष्टिः ॥ २४
भीम उवाच ।
नाहं कुप्ये सूतपुत्रस्य राज-
न्नेष सत्यं दासधर्मः प्रदिष्टः ।
किं विद्विषो वै मामेवं व्याहरेयु-
र्नादेवीस्त्वं यद्यनया नरेन्द्र ॥ २५
वैशंपायन उवाच ।
भीमसेनवचः श्रुत्वा राजा दुर्योधनस्तदा ।
युधिष्ठिरमुवाचेदं तूष्णींभूतमचेतनम् ॥ २६
भीमार्जुनौ यमौ चैव स्थितौ ते नृप शासने ।
प्रश्नं ब्रूहि च कृष्णां त्वमजितां यदि मन्यसे ॥ २७
एवमुक्त्वा तु कौन्तेयमपोह्य वसनं स्वकम् ।
स्मयन्निवेक्ष्य पाञ्चालीमैश्वर्यमदमोहितः ॥ २८
कदलीदण्डसदृशं सर्वलक्षणसंयुतम् ।
गजहस्तप्रतीकाशं वज्रप्रतिमगौरवम् ॥ २९
अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव ।
द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत् ॥ ३०

द्रौपदीपणनात् प्रागिति शेषः । अतो द्रौपदी न दासभावमापन्नेति भावः ॥ १३ ॥ पाशसितः पाशबद्धः ॥ १६ ॥

भीमसेनस्तमालोक्य नेत्रे उत्फाल्य लोहिते ।
प्रोवाच राजमध्ये तं सभां विश्रावयन्निव ॥ ३१
पितृभिः सह सालोक्यं मा स्म गच्छेद्वृकोदरः ।
यद्येतमूरुं गदया न भिन्द्यां ते महाहवे ॥ ३२
वैशंपायन उवाच ।
क्रुद्धस्य तस्य सर्वेभ्यः स्रोतोभ्यः पावकार्चिषः ।
वृक्षस्येव विनिश्चेरुः कोटरेभ्यः प्रदह्यतः ॥ ३३
विदुर उवाच ।
परं भयं पश्यत भीमसेना-
त्तद्बुध्यध्वं पार्थिवाः प्रातिपेयाः ।
दैवेरितो नूनमयं पुरस्ता-
त्परोऽनयो भरतेषूदपादि ॥ ३४
अतिद्यूतं कृतमिदं धार्तराष्ट्रा
यस्मात्स्त्रियं विवदध्वं सभायाम् ।
योगक्षेमौ नश्यतो वः समग्रौ
पापान्मन्त्रान्कुरवो मन्त्रयन्ति ॥ ३५
इमं धर्मं कुरवो जानताशु
ध्वस्ते धर्मे परिषत्संप्रदुष्येत् ।
इमां चेत्पूर्वं कितवोऽग्लहिष्य-
दीशोऽभविष्यदपराजितात्मा ॥ ३६
स्वप्ने यथैतद्विजितं धनं स्या-
देवं मन्ये यस्य दीव्यत्यनीशः ।
गान्धारराजस्य वचो निशम्य
धर्मादस्मात्कुरवो माऽपयात ॥ ३७
दुर्योधन उवाच ।
भीमस्य वाक्ये तद्वदेवार्जुनस्य
स्थितोऽहं वै यमयोश्चैवमेव ।
युधिष्ठिरं ते प्रवदन्त्वनीश-
मथो दास्यान्मोक्ष्यसे याज्ञसेनि ॥ ३८
अर्जुन उवाच ।
ईशो राजा पूर्वमासीद्ग्लहे नः
कुन्तीसुतो धर्मराजो महात्मा ।
ईशस्त्वयं कस्य पराजितात्मा
तज्जानीध्वं कुरवः सर्व एव ॥ ३९

कर्ण उवाच ।
दुश्शासन निबोधेदं वचनं वै प्रभाषितम् ।
किमनेन चिरं वीर नयस्व द्रुपदात्मजाम् ।
दासीभावेन भुङ्क्ष्व त्वं यथेष्टं कुरुनन्दन ॥ ४०
वैशंपायन उवाच ।
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
साधु कर्ण महाबाहो यथेष्टं क्रियतामिति ॥ ४१
ततो दुश्शासनस्तूर्णं द्रुपदस्य सुतां बलात् ।
प्रवेशयितुमारब्धः स चकर्ष दुरात्मवान् ॥ ४२
ततो विक्रोशति तदा पाञ्चाली वरवर्णिनी ॥४३
द्रौपद्युवाच ।
परित्रायस्व मां भीष्म द्रोण द्रौणे तथा कृप ।
परित्रायस्व विदुर धर्मिष्ठो धर्मवत्सल ॥ ४४
धृतराष्ट्र महाराज परित्रायस्व वै स्नुषाम् ।
गान्धारि त्वं महाभागे सर्वज्ञे सर्वदर्शिनि ।
परित्रायस्व मां भीरुं सुयोधनभयार्दिताम् ॥४५
त्वमार्ये वीरजननि किं मां पश्यसि यादवीम् ।
क्लिश्यमानामनार्येण न त्रायसि वधूं स्वकाम् ॥४६
यदि लालप्यमानां मां न कश्चित्किंचिदब्रवीत् ।
हा हताऽस्मि सुमन्दात्मा सुयोधनवशं गता ॥ ४७
न वै पाण्डुर्नरपतिर्न धर्मो न च देवराट् ।
न वायुर्नाश्विनौ वाऽपि परित्रायन्ति वै स्नुषाम् ॥
धिक्कष्टं यदि जीवेयं मन्दभाग्या पतिव्रता ॥ ४९
विदुर उवाच ।
शृणोमि वाक्यं तव राजपुत्रि
नेमे पार्थाः किंचिदपि ब्रुवन्ति ।
सा त्वं प्रियार्थं शृणु वाक्यमेत-
द्यदुच्यते पापमतिः कृतघ्नः ॥ ५०
सुयोधनः सानुचरः सुदुष्टः
सहैव राजा निकृतः सूनुना च ।
यद्येष वाचं महदुच्यमानां
न श्रोष्यते पापमतिः सुदुष्टः ॥ ५१
वैशंपायन उवाच ।

स्रोतोभ्यः रोमकूपेभ्यः ॥ ३३ ॥

द्विनवतितमोऽध्यायः ॥ ९२ ॥

इत्येवमुक्त्वा द्रुपदस्य पुत्रीं
क्षत्ताऽब्रवीद्धृतराष्ट्रस्य पुत्रम् ।
मा क्लिश्यतां वै द्रुपदस्य पुत्रीं
मा त्वं चरीं द्रक्ष्यसि राजपुत्र ॥ ५२
वैशंपायन उवाच ।
तमेवमुक्त्वा प्रथमं धृतराष्ट्रमुवाच ह ॥ ५३
विदुर उवाच ।
यद्येवं त्वं महाराज संक्लेशयसि द्रौपदीम् ।
अचिरेणैव कालेन पुत्रस्ते सह मन्त्रिभिः ।
गमिष्यति क्षयं पापः पाण्डवक्षयकारणात् ॥५४
भीमार्जुनाभ्यां क्रुद्धाभ्यां माद्रीपुत्रद्वयेन च ।
तस्मान्निवारय सुतं मा विनाशं विचिन्तय ॥५५
वैशंपायन उवाच ।
एतच्छ्रुत्वा मन्दबुद्धिर्नोत्तरं किंचिदब्रवीत् ।
ततो दुर्योधनस्तत्र दैवमोहबलात्कृतः ॥ ५६
अचिन्त्य क्षत्तुर्वचनं हर्षेणायतलोचनः ।
ऊरू दर्शयते पापो द्रौपद्या वै मुहुर्मुहुः ॥ ५७
ऊरौ संदर्श्यमाने तु निरीक्ष्य तु सुयोधनम् ।
वृकोदरस्तदालोक्य नेत्रे चोत्फाल्य लोहिते ॥५८
एतत्समीक्ष्यात्मनि चावमानं
नियम्य मन्युं बलवान्स मानी ।
राजानुजः संसदि कौरवाणां
विनिष्क्रमन्वाक्यमुवाच भीमः ॥ ५९
अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाक्षकितवं सहदेवो हनिष्यति ॥ ६०
इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥६१
सुयोधनमिमं पापं हन्ताऽस्मि गदया युधि ।
शिरः पादेन चास्याहमधिष्ठास्यामि भूतले ॥६२
वक्षः शूरस्य निर्वास्य परुषस्य दुरात्मनः ।
दुश्शासनस्य रुधिरं पास्यामि मृगराडिव ॥ ६३
अर्जुन उवाच ।
भीमसेन न ते सन्ति येषां वैरं त्वया सह ।
मन्दा गृहेषु सुखिनो न बुद्ध्यन्ते महद्भयम् ॥६४
नैव वाचा व्यवसितं भीम विज्ञायते सताम् ।
यदि स्थास्यन्ति सङ्ग्रामे क्षत्रधर्मेण वै सह ॥ ६५
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुश्शासनचतुर्थानां भूमिः पास्यति शोणितम् ६६
असूयितारं वक्तारं प्रहृष्टानां दुरात्मनाम् ।
भीमसेन नियोगात्ते हन्ताऽहं कर्णमाहवे ॥ ६७
कर्णं कर्णानुगांश्चैव रणे हन्ताऽस्मि पत्रिभिः ।
ये चान्ये विप्रयोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।
तान्स्म सर्वाञ्छितैर्बाणैर्नेताऽस्मि यमसादनम् ॥
चलेद्धि हिमवान्स्थानान्निष्प्रभः स्याद्दिवाकरः ।
शैत्यं सोमात्प्रणश्येत मत्सत्यं विचलेद्यदि ॥ ६९
वैशंपायन उवाच ।
इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः ।
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ ७०
सौबलस्य वधप्रेप्सुरिदं वचनमब्रवीत् ।
क्रोधसंरक्तनयनो निश्वस्य च मुहुर्मुहुः ॥ ७१
सहदेव उवाच ।
यानक्षान्मन्यसे मूढ गान्धाराणां यशोहर ।
नैते ह्यक्षाः शिता बाणास्त्वयैते समरे धृताः ॥७२
यथा चैवोक्तवान्भीमस्त्वामुद्दिश्य सबान्धवम् ।
कर्ताऽहं कर्मणा चास्य कुरुकार्याणि सर्वशः ।
यदि स्थास्यसि सङ्ग्रामे क्षत्रधर्मेण सौबल ॥ ७३
वैशंपायन उवाच ।
सहदेववचः श्रुत्वा नकुलोऽपि विशांपते ।
दर्शनीयतमो नृणामिदं वचनमब्रवीत् ॥ ७४
नकुल उवाच ।
सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन्धृतराष्ट्रजैः ।
यैर्वाचः श्राविता रूक्षा धूर्तैर्दुर्योधनप्रियैः ॥७५
धार्तराष्ट्रान्सुदुर्वृत्तान्मुमूर्षून्कालचोदितान् ।
दर्शयिष्यामि भूयिष्ठमहं वैवस्वतक्षयम् ॥ ७६
उलूकं च दुरात्मानं सौबलस्य प्रियं सुतम् ।
हन्ताऽहमस्मि समरे मम शत्रुं नराधमम् ॥ ७७
निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्तास्मि नचिरादिव ॥ ७८

द्रौपद्युवाच ।
यस्माच्चोरुं दर्शयसे यस्माच्चोरुं निरीक्षसे ।
तस्मात्तव ह्यधर्मिष्ठ ऊरौ मृत्युर्भविष्यति ॥ ७९
यस्माच्चैवं क्लेशयति भ्राता ते मां दुरात्मवान् ।
तस्माद्रुधिरमेवास्य पास्यते वै वृकोदरः ॥ ८०
इमं च पापिष्ठमतिं कर्णं ससुतबान्धवम् ।
सामात्यं सपरीवारं हनिष्यति धनञ्जयः ॥ ८१
क्षुद्रधर्मं नैकृतिकं शकुनिं पापचेतसम् ।
सहदेवो रणे क्रुद्धो हनिष्यति सबान्धवम् ॥ ८२
वैशंपायन उवाच ।
एवमुक्ते तु वचने द्रौपद्या धर्मशीलया ।
ततोऽन्तरिक्षात्सुमहत्पुष्पवर्षमवापतत् ॥ ८३
तेषां तु वचनं श्रुत्वा नोचुस्तत्र सभासदः ।
अर्जुनस्य भयाद्राजन्नभून्निश्शब्दमत्र वै ॥ ८४

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

कुप्यतोऽर्जुनस्य युधिष्ठिरेण परिसान्त्वनम् ॥ १ ॥ धृतराष्ट्रेण वरं वरयेति द्रौपदींप्रति चोदनम् ॥ २ ॥ तत्प्रार्थनया धृतराष्ट्रेण युधिष्ठिरादीनामदासत्ववरदानम् ॥ ३ ॥

वैशंपायन उवाच ।
द्रौपद्या वचनं श्रुत्वा चुकोपाथ धनञ्जयः ।
स तदा क्रोधताम्राक्ष इदं वचनमब्रवीत् ॥ १
अयं तु मां वारयते धर्मराजो युधिष्ठिरः ।
इत्युक्त्वा क्रोधताम्राक्षो धनुरादाय वीर्यवान् ॥२
सव्यसाची समुत्पत्य ताञ्छत्रून्समुदैक्षत ।
उद्यतं फल्गुनं तत्र ददृशुः सर्वपार्थिवाः ॥ ३
युगान्ते सर्वलोकांस्तु दहन्तमिव पावकम् ।
वीक्षमाणं धनुष्पाणिं हन्तुकामं मुहुर्मुहुः ॥ ४
हन्तुकामं पशून्क्रुद्धं रुद्रं दक्षक्रतौ यथा ।
तथाभूतं नरं दृष्ट्वा विषेदुस्तत्र मानवाः ॥ ५
धनञ्जयस्य वीर्यज्ञा निराशा जीविते तदा ।
मृतभूता भवन्सर्वे नेत्रैरनिमिषैरिव ॥ ६
अर्जुनं धर्मपुत्रं च समुदैक्षन्त पार्थिवाः ।
क्रुद्धं तदाऽर्जुनं दृष्ट्वा पृथिवी च चचाल ह ॥ ७
खेचराणि च भूतानि वित्रेसुर्वै भयार्दिताः ।
नादित्यो विरराजाथ नापि वान्ति च मारुताः ८
न चन्द्रो न च नक्षत्रं द्यौर्दिशो न विभान्ति ह ।
सर्वमाविद्धमभवज्जगत्स्थावरजङ्गमम् ॥ ९
उत्पतन्स बभौ पार्थो दिवाकर इवाम्बरे ॥ १०
पार्थं दृष्ट्वा तथा क्रुद्धं कालान्तकयमोपमम् ।
भीमसेनो मुदा युक्तो युद्धायैव मनो दधे ॥ ११
पाञ्चाली च ददर्शाथ सुसंक्रुद्धं धनञ्जयम् ।
हन्तुकामं रिपून्सर्वान्सुपर्णमिव पन्नगान् ॥ १२
दुष्प्रेक्षः सोऽभवत्क्रुद्धो युगान्ताग्निरिव ज्वलन् ।
तं दृष्ट्वा तेजसा युक्तं विव्यधुः पुरवासिनः॥ १३
उत्पतन्तं तु वेगेन ततो दृष्ट्वा धनञ्जयम् ।
जग्राह स तदा राजा पुरुहूतो यथा हरिम् ॥१४
उवाच स घृणी ज्येष्ठो धर्मराजो युधिष्ठिरः ।
मा पार्थ साहसं कार्षीर्मा विनाशं गमेद्यशः १५
अहमेतान्पापकृतो द्यूतज्ञान्दग्धुमुत्सहे ।
किन्त्वसत्यगतिं दृष्ट्वा क्रोधो नाशमुपैति मे॥१६
त्वमिमं जगतोऽर्थे वै कोपं संयच्छ पाण्डव॥१७
वैशंपायन उवाच ।
एवमुक्तस्तदा राज्ञा पाण्डवोऽथ धनञ्जयः ।
क्रोधं संशमयन्पार्थो धार्तराष्ट्रं प्रति स्थितः ॥१८
तस्मिन्वीरे प्रशान्ते तु पाण्डवे फल्गुने पुनः ।
सुसंप्रहृष्टमभवज्जगत्स्थावरजङ्गमम् ॥ १९
वारितं च तथा दृष्ट्वा भ्रात्रा पार्थं वृकोदरः ।
बभूव विमना राजन्नभून्निश्शब्दमत्र वै ॥ २०
ततो राज्ञो धृतराष्ट्रस्य गेहे
गोमायुरुच्चैर्व्याहरदग्निहोत्रे ।

---

अग्निहोत्रे गृह्याग्निसमीपे ॥ २१ ॥

तं रासभाः प्रत्यभाषन्त राज-
न्समन्ततः पक्षिणश्चैव रौद्राः ॥ २१
तं वै शब्दं विदुरस्तत्त्ववेदी
शुश्राव घोरं सुबलात्मजा च ।
भीष्मो द्रोणो गौतमश्चापि विद्वान्
स्वस्तिस्वस्तीत्यपि चैवाहुरुच्चैः ॥ २२
ततो गान्धारी विदुरश्चापि विद्वां-
स्तमुत्पातं घोरमालक्ष्य राज्ञे ।
निवेदयामासतुरार्तवत्तदा
ततो राजा वाक्यमिदं बभाषे ॥ २३
धृतराष्ट्र उवाच ।
हतोऽसि दुर्योधन मन्दबुद्धे
यस्त्वं सभायां कुरुपुङ्गवानाम् ।
स्त्रियं समाभाषसि दुर्विनीत
विशेषतो द्रौपदीं धर्मपत्नीम् ॥ २४
वैशंपायन उवाच ।
एवमुक्त्वा धृतराष्ट्रो मनीषी
हितान्वेषी बान्धवानामपायात् ।
कृष्णां पाञ्चालीमब्रवीत्सान्त्वपूर्वं
विमृश्यैतत्प्रज्ञया तत्त्वबुद्धिः ॥ २५
धृतराष्ट्र उवाच ।
वरं वृणीष्व पाञ्चालि मत्तो यदभिवाञ्छसि ।
वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥ २६
द्रौपद्युवाच ।
ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ ।
सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः ॥ २७
मनस्विनमजानन्तो मैवं ब्रूयुः कुमारकाः ।
एतं वै दासपुत्रेति प्रतिविन्ध्यं ममात्मजम् ॥ २८
राजपुत्रः पुरा भूत्वा यथा नान्यः पुमान्क्वचित् ।
लालितो दासपुत्रत्वं पश्यन्नश्येद्धि भारत ॥ २९
धृतराष्ट्र उवाच ।
एवं भवतु कल्याणि यथा त्वमभिभाषसे ।
द्वितीयं ते वरं भद्रे ददानि वरयस्व ह ।
मनो हि मे वितरति नैकं त्वं वरमर्हसि ॥ ३०
द्रौपद्युवाच ।
सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ ।
यमौ च वरये राजन्नदासान्स्ववशानहम् ॥ ३१
धृतराष्ट्र उवाच ।
तथाऽस्तु ते महाभागे यथा त्वं नन्दिनीच्छसि ।
तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसंस्कृता ।
त्वं हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी ॥ ३२
द्रौपद्युवाच ।
लोभो धर्मस्य नाशाय भगवन्नाहमुत्सहे ।
अनर्हा वरमादातुं तृतीयं राजसत्तम ॥ ३३
एकमाहुर्वैश्यवरं द्वौ तु क्षत्रस्त्रियो वरौ ।
त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः ॥ ३४
पापीयांस इमे भूत्वा संतीर्णाः पतयो मम ।
वेत्स्यन्ति चैव भद्राणि राजन्पुण्येन कर्मणा ॥ ३५

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

---

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

कर्णप्रलपितम् ॥ १ ॥ क्रुद्धं भीमं निवार्य युधिष्ठिरस्य धृतराष्ट्रसमीपगमनम् ॥ २ ॥

कर्ण उवाच ।
या नः श्रुता मनुष्येषु स्त्रियो रूपेण संमताः ।
तासामेतादृशं कर्म न कस्याश्चन शुश्रुम ॥ १
क्रोधाविष्टेषु पार्थेषु धार्तराष्ट्रेषु चाप्यति ।
द्रौपदी पाण्डुपुत्राणां कृष्णा शान्तिरिहाभवत् ॥ २
अप्लवेऽम्भसि मग्नानामप्रतिष्ठे निमज्जताम् ।
पाञ्चाली पाण्डुपुत्राणां नौरेषा पारगाऽभवत् ॥ ३
वैशंपायन उवाच ।

पापीयांसो दासभावेन नीचाः वेत्स्यन्ति लप्स्यन्ति ॥ ३६ ॥

त्रिनवतितमोऽध्यायः ॥ ९३ ॥

तद्वै श्रुत्वा भीमसेनः कुरुमध्येऽत्यमर्षणः ।
स्त्री गतिः पाण्डुपुत्राणामित्युवाच सुदुर्मनाः ॥४
भीम उवाच ।
त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् ।
अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः ॥५
अमेध्ये वै गतप्राणे शून्ये ज्ञातिभिरुज्झिते ।
देहे त्रितयमेवैतत्पुरुषस्योपयुज्यते ॥ ६
तन्नो ज्योतिरभिहतं दाराणामभिमर्शनात् ।
धनञ्जय कथं स्वित्स्यादपत्यमभिमृष्टजम् ॥ ७
अर्जुन उवाच ।
न चैवोक्ता न चानुक्ता हीनतः परुषा गिरः ।
भारत प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ॥ ८
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः प्रतिविजानन्तो लब्धसंभावनाः स्वयम् ॥९
भीम उवाच ।
इहैवैतानहं सर्वान्हन्मि शत्रून्समागतान् ।
अथ निष्क्रम्य राजेन्द्र समूलान्हन्मि भारत ॥१०
किं नो विवदितेनेह किमुक्तेन च भारत ।
अद्यैवैतान्निहन्मीह प्रशाधि पृथिवीमिमाम् ॥११
इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिः सह ।
मृगमध्ये यथा सिंहो मुहुर्मुहुरुदैक्षत ॥ १२
सान्त्व्यमानो वीक्षमाणः पार्थेनाक्लिष्टकर्मणा ।
खिद्यत्येव महाबाहुरन्तर्दाहेन वीर्यवान् ॥ १३
क्रुद्धस्य तस्य स्रोतोभ्यः कर्णादिभ्यो नराधिप ।
सधूमः सस्फुलिङ्गार्चिः पावकः समजायत ॥१४
भ्रुकुटीकृतदुष्प्रेक्ष्यमभवत्तस्य तन्मुखम् ।
युगान्तकाले संप्राप्ते कृतान्तस्येव रूपिणः ॥१५
युधिष्ठिरस्तमावार्य बाहुना बाहुशालिनम् ।
मैवमित्यब्रवीच्चैनं जोषमास्स्वेति भारत ॥ १६
निवार्य च महाबाहुं कोपसंरक्तलोचनम् ।
पितरं समुपातिष्ठद्धृतराष्ट्रं कृताञ्जलिः ॥ १७

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

धृतराष्ट्रानुज्ञया सभ्रातृकस्य युधिष्ठिरस्य इन्द्रप्रस्थगमनम् ॥ १ ॥

युधिष्ठिर उवाच ।
राजन्किं करवामस्ते प्रशाध्यस्मांस्त्वमीश्वरः ।
नित्यं हि स्थातुमिच्छामस्तव भारत शासने ॥ १
धृतराष्ट्र उवाच ।
अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत ।
अनुज्ञाताः सहधनाः स्वराज्यमनुशासत ॥ २
इदं चैवावबोद्धव्यं वृद्धस्य मम शासनम् ।
मया निगदितं सर्वं पथ्यं निःश्रेयसं परम् ॥ ३
वेत्थ त्वं तात धर्माणां गतिं सूक्ष्मां युधिष्ठिर ।
विनीतोऽसि महाप्राज्ञ वृद्धानां पर्युपासिता ॥४
यतो बुद्धिस्ततः शान्तिः प्रशमं गच्छ भारत ।
नादारुणि पतेच्छस्त्रं दारुण्येतन्निपात्यते ॥ ५
न वैराण्यभिजानन्ति गुणान्पश्यन्ति नागुणान् ।
विरोधं नाधिगच्छन्ति ये त उत्तमपूरुषाः ॥ ६
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ते प्रतिक्रियाम् ॥७
संवादे परुषाण्याहुर्युधिष्ठिर नराधमाः ।
प्रत्याहुर्मध्यमास्त्वेतेऽनुक्ताः परुषमुत्तरम् ॥ ८
न चोक्ता नैव चानुक्तास्त्वहिताः परुषा गिरः ।
प्रतिजल्पन्ति वै धीराः सदा तूत्तमपूरुषाः ॥ ९
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ॥१०
असंभिन्नार्यमर्यादाः साधवः प्रियदर्शनाः ।
तथा चरितमार्येण त्वयाऽस्मिन्सत्समागमे ॥११

जोषं तूष्णीम् ॥ १६ ॥

दुर्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः ।
मातरं चैव गान्धारीं मां च त्वं गुणकाङ्क्षया १२
उपस्थितं वृद्धमन्धं पितरं पश्य भारत ।
प्रेक्षापूर्वं मया द्यूतमिदमासीदुपेक्षितम् ॥ १३
मित्राणि द्रष्टुकामेन पुत्राणां च बलाबलम् ।
अशोच्याः कुरवो राजन्येषां त्वमनुशासिता १४
मन्त्री च विदुरो धीमान्सर्वशास्त्रविशारदः ।
त्वयि धर्मोऽर्जुने धैर्यं भीमसेने पराक्रमः ॥ १५
श्रद्धा च गुरुशुश्रूषा यमयोः पुरुषाग्र्ययोः ।
अजातशत्रो भद्रं ते खाण्डवप्रस्थमाविश ।
भ्रातृभिस्तेऽस्तु सौभ्रात्रं धर्मे ते धीयतां मनः १६
वैशंपायन उवाच ।
इत्युक्तो भरतश्रेष्ठ धर्मराजो युधिष्ठिरः ।
कृत्वाऽऽर्यसमयं सर्वं प्रतस्थे भ्रातृभिः सह ॥१७
ते रथान्मेघसङ्काशानास्थाय सह कृष्णया ।
प्रययुर्हृष्टमनस इन्द्रप्रस्थं पुरोत्तमम् ॥ १८

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

॥ समाप्तं च द्यूतपर्व ॥

---

## (अथ अनुद्यूतपर्व ॥ ८ ॥)

### षण्णवतितमोऽध्यायः ॥ ९६ ॥

दुर्योधनेन धृतराष्ट्रसमीपे कार्तवीर्यार्जुनोपाख्यानकथनम् ॥ १ ॥

---

जनमेजय उवाच ।
अनुज्ञातांस्तान्विदित्वा सरत्नधनसञ्चयान् ।
पाण्डवान्धार्तराष्ट्राणां कथमासीन्मनस्तदा ॥ १
वैशंपायन उवाच ।
अनुज्ञातांस्तान्विदित्वा धृतराष्ट्रेण धीमता ।
राजन्दुःशासनः क्षिप्रं जगाम भ्रातरं प्रति ॥ २
दुर्योधनं समासाद्य सामात्यं भरतर्षभ ।
दुःखार्तो भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ ३
दुःशासन उवाच ।
दुःखेनैतत्समानीतं स्थविरो नाशयत्यसौ ।
शत्रुसाद्गमयद्द्रव्यं तद्बुध्यध्वं महारथाः ॥ ४
अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
मिथः सङ्गम्य सहिताः पाण्डवान्प्रति मानिनः ॥५
वैचित्रवीर्यं राजानं धृतराष्ट्रं मनीषिणम् ।
अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन् ॥६
दुर्योधन उवाच ।
न त्वयेदं श्रुतं राजन्यज्जगाद बृहस्पतिः ।
शक्रस्य नीतिं प्रवदन्विद्वान्देवपुरोहितः ॥ ७
सर्वोपायैर्निहन्तव्याः शत्रवः शत्रुसूदन ।
पुरा युद्धाद्बलाद्वापि प्रकुर्वन्ति तवाहितम् ॥ ८
ते वयं पाण्डवधनैः सर्वान्संपूज्य पार्थिवान् ।
यदि तान्योधयिष्यामः किं वै नः परिहास्यति ॥९
अहीनाशीविषान्क्रुद्धान्नाशाय समुपस्थितान् ।
कृत्वा कण्ठे च पृष्ठे च कः समुत्स्रष्टुमर्हति ॥ १०
आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः ।
निःशेषान्नः करिष्यन्ति क्रुद्धा ह्याशीविषा इव ११
सन्नद्धो ह्यर्जुनो याति विधृत्य परमेषुधी ।
गाण्डीवं मुहुरादत्ते निःश्वसंश्च निरीक्षते ॥ १२
गदां गुर्वीं समुद्यम्य त्वरितश्च वृकोदरः ।
स्वरथं योजयित्वाऽशु निर्यात इति नः श्रुतम् १३
नकुलः खड्गमादाय चर्म चाप्यर्धचन्द्रवत् ।
सहदेवश्च राजा च चक्रुराकारमिङ्गितैः ॥ १४
ते त्वास्थाय रथान्सर्वे बहुशस्त्रपरिच्छदान् ।
अभिघ्नन्तो रथव्रातान्सेनायोगाय निर्ययुः ॥ १५

---

गमयत् अगमयत् ॥ ४ ॥

परिहास्यति नङ्क्ष्यति ॥ ९ ॥

न क्षंस्यन्ते तथाऽस्माभिर्जातु विप्रकृता हि ते ।
द्रौपद्याश्च परिक्लेशं कस्तेषां क्षन्तुमर्हति ॥ १६
'न पश्यामि रणे क्रुद्धं बीभत्सुं प्रतिवारणम् ।
भीष्मो द्रोणश्च कर्णश्च द्रौणिश्च रथिनां वरः॥१७
कृपश्च वृषसेनश्च विकर्णश्च जयद्रथः ।
बाह्लीकः सोमदत्तश्च भूरिर्भूरिश्रवाः शलः ॥ १८
शकुनिः ससुतश्चैव नृपाश्चान्ये च कौरवाः ।
नैते सर्वे रणोद्युक्ताः पार्थं सोढुमशक्नुवन् ॥ १९
अर्जुनेन समो लोके नास्ति वीर्ये धनुर्धरः ।
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ॥ २०

धृतराष्ट्र उवाच ।

कस्त्वयोक्तः पुमान्वीरो बीभत्सुसमविक्रमः ।
तं मे ब्रूहि महावीर्यं श्रोतुमिच्छामि पुत्रक ॥ २१

दुर्योधन उवाच ।

कार्तवीर्यस्य चरितं शृणु राजन्महात्मनः ।
अव्यक्तप्रभवो ब्रह्मा सर्वलोकपितामहः ॥ २२
ब्रह्मणोऽत्रिः सुतो विद्वानत्रेः पुत्रो निशाकरः ।
सोमस्य तु बुधः पुत्रो बुधस्य तु पुरूरवाः ॥२३
तस्याप्यथ सुतोऽप्यायुरायोस्तु नहुषः सुतः ।
नहुषस्य ययातिस्तु ययातेस्तनुजो यदुः ॥ २४
यदोः पुत्रो महाराज सहस्रौजेति विश्रुतः ।
सहस्रौजसुतो राजञ्छक्रदासेति विश्रुतः ॥ २५
शक्रदासस्य दायादो हेहयो नाम पार्थिवः ।
हेहयस्याभवत्पुत्रो धर्मनेत्र इति श्रुतः ॥ २६
धर्मनेत्रस्य तु कृती कृतवीर्यस्तु कार्तिजः ।
कृतवीर्यस्य तनयो ह्यर्जुनो बलिनां वरः ॥ २७
स चार्जुनो महाराज तपो घोरं चकार ह ।
साग्रं वर्षायुतं जज्ञ इत्येवं मे श्रुतं पुरा ॥ २८
तथेयं पृथिवी राजन्ससद्वीपा सपत्तना ।
ससमुद्राकरा तात विधिनोग्रेण वै जिता ॥ २९
स चार्जुनोऽथ तेजस्वी तपः परमदुश्चरम् ।
दत्तमाराधयामास सोऽर्जुनोऽत्रिसुतं मुनिम् ३०
तस्य दत्तो वरान्प्रादाच्चतुरः पार्थिवस्य वै ।
पूर्वं बाहुसहस्रं तु प्रार्थितः परमो वरः ॥ ३१
अधर्मे प्रीयमाणस्य सद्भिस्तत्र निवारणम् ।
धर्मेण पृथिवीं जित्वा धर्मेणैव हि रञ्जनम् ॥३२
सङ्ग्रामान्सुबहून्कृत्वा हत्वा चारीन्सहस्रशः ।
सङ्ग्रामे यतमानस्य वधश्चैवाधिकाद्रणे ॥ ३३
तस्य बाहुसहस्रं तु युध्यतः किल भारत ।
रथो ध्वजश्च संजज्ञ इत्येवं मे श्रुतं पुरा ॥ ३४
तथेयं पृथिवी राजन्ससप्तद्वीपा सपत्तना ।
ससमुद्राकरा तात विधिनोग्रेण वै जिता ॥ ३५
स चार्जुनोऽथ तेजस्वी सप्तद्वीपेश्वरोऽभवत् ।
स च राजा महायज्ञानाजहार महाबलः ।
प्रशशास महाबाहुर्महीं स च समा बहूः ॥ ३६
ततोऽर्जुनः कदाचिद्वै राजन्माहिष्मतीपतिः ।
नर्मदां भरतश्रेष्ठ तां तु दारैर्ययौ सह ॥ ३७
ततस्तां स नदीं गत्वा प्रविश्यान्तर्जले तदा ।
कर्तुं राजञ्जलक्रीडां ततो राजोपचक्रमे ॥ ३८
तस्मिन्नेव ततः काले रावणो राक्षसैः सह ।
लङ्काया ईश्वरस्तात तं देशं प्रययौ बली ॥ ३९
ततस्तमर्जुनं दृष्ट्वा नर्मदायां दशाननः ।
नित्यं क्रोधपरो धीरो वरदानेन मोहितः ॥ ४०
अभ्यधावत्सुसंक्रुद्धो महेन्द्रं शम्बरो यथा ।
अर्जुनोऽप्यथ तं दृष्ट्वा रावणं प्रत्यवारयत् ॥ ४१
ततस्तौ चक्रतुर्युद्धं रावणश्चार्जुनश्च वै ।
ततस्तु दुर्जयं वीरं वरदानेन दर्पितम् ॥ ४२
राक्षसेन्द्रं मनुष्येन्द्रो जित्वा बध्वा रणे बलात् ।
बध्वा धनुर्ज्यया राजन्विवेशाथ पुरीं स्वकाम् ४३
स तु तं बन्धितं श्रुत्वा पुलस्त्यो रावणं तदा ।
मोक्षयामास बन्धाद्वै पुरे दृष्ट्वाऽर्जुनं तदा ॥ ४४
ततः कदाचित्तेजस्वी कार्तवीर्यार्जुनो बली ।
समुद्रतीरं गत्वाथ विचरन्दर्पमोहितः ॥ ४५
अवाकिरच्छितशरैः समुद्रं स तु भारत ।
तं समुद्रो नमस्कृत्य कृताञ्जलिरभाषत ॥ ४६
आशुगान्वीर मा मुञ्च ब्रूहि किं करवाणि ते ।
मदाश्रयाणि सत्वानि त्वद्विसृष्टैर्महेषुभिः ।
बाध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ॥४७

अर्जुन उवाच ।
देहि सिन्धुपते युद्धमद्यैव त्वरया मम ।
अथवा पीडयामि त्वां तस्मात्त्वं कुरु माचिरम् ४८
समुद्र उवाच ।
लोके राजन्महावीर्या बहवो निवसन्ति ये ।
तेषामेकेन राजेन्द्र कुरु युद्धं महाबल ॥ ४९
अर्जुन उवाच ।
मत्समो यदि सङ्ग्रामे वरायुधधरः क्वचित् ।
विद्यते तं ममाचक्ष्व यः समासेत मा मृधे ॥५०
समुद्र उवाच ।
महर्षिर्जमदग्निस्तु यदि राजन्परिश्रुतः ।
तस्य पुत्रो रणं दातुं यथावद्वै तवार्हति ॥ ५१
दुर्योधन उवाच ।
समुद्रस्य वचः श्रुत्वा राजा माहिष्मतीपतिः ।
नारदस्य च वै पूर्वं क्रोधेन महता वृतः ॥ ५२
ततः प्रतिययौ शीघ्रं क्रोधेन सह भारत ।
स तमाश्रममागत्य काममेवान्वपद्यत ॥ ५३
स कामं प्रतिकूलानि चकार सह बन्धुभिः ।
आयासं जनयामास रामस्य स महात्मनः ॥५४
ततस्तेजः प्रजज्वाल रामस्यामिततेजसः ।
प्रदहन्निव सैन्यानि रश्मिमानिव तेजसा ॥ ५५
अथ तौ चक्रतुर्युद्धं वृत्रवासवयोरिव ॥ ५६
ततः परशुमादाय नृपं बाहुसहस्रिणम् ।
चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ॥५७
तं हतं पतितं दृष्ट्वा समेतास्तस्य बान्धवाः ।
असीनादाय शक्तीश्च रामं ते प्रत्यवारयन् ॥५८
रामोऽपि रथमास्थाय धनुरायम्य सत्वरः ।
विसृजन्परमास्त्राणि व्यधमत्पार्थिवान्बली ॥५९
ततस्तु क्षत्रिया राजञ्जामदग्न्यभयार्दिताः ।
विविशुर्गिरिदुर्गाणि मृगाः सिंहभयादिव ॥ ६०
तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठति ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥६१
तथा च द्रविडाः काचाः पुण्ड्राश्च शबरैः सह ।
वृषलत्वं परिगता विच्छिन्नाः क्षत्रधर्मिणः ॥६२
ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः ।
द्विजैरभ्युदितं क्षत्रं तानि रामो निहत्य च ॥६३
ततस्त्रिस्सप्तमे याते रामं वागशरीरिणी ।
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता ॥ ६४
रामराम निवर्तस्व स्वगुणं नात्र पश्यसि ।
क्षत्रबन्धूनिमान्प्राणैर्विप्रयुज्य पुनः पुनः ॥ ६५
तथैव तं महात्मानमृचीकप्रमुखास्तथा ।
रामराम महावीर्य निवर्तस्वेत्यथाब्रुवन् ॥ ६६
पितुर्वधममृष्यंस्तु रामः प्रोवाच तानृषीन् ।
नार्हा हन्त भवन्तो मां निवारयितुमित्युत ॥६७
पितर ऊचुः ।
नार्हसि क्षत्रबन्धूंस्त्वं निहन्तुं जयतां वर ।
न हि युक्तं त्वया तात ब्राह्मणेन सता नृपान् ६८
दुर्योधन उवाच ।
पितॄणां वचनं श्रुत्वा क्रोधं त्यक्त्वा स भार्गवः ।
अश्वमेधसहस्राणि नरमेधशतानि च ॥ ६९
इष्ट्वा सागरपर्यन्तां काश्यपाय ददौ महीम् ।
तेन रामेण सङ्ग्रामे तुल्यस्तात धनञ्जयः ॥ ७०
कार्तवीर्येण च रणे तुल्यः पार्थो न संशयः ।
रणे विक्रम्य राजेन्द्र पार्थं जेतुं न शक्यते ॥७१

॥ इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

---

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

दुर्योधनेन धृतराष्ट्रसमीपे अर्जुनप्रभाववर्णनम् ॥ १ ॥ दुर्योधनदुर्बोधनेन धृतराष्ट्रस्य पुनर्द्यूताय पाण्डवानयनाभ्यनुज्ञा ॥ २ ॥

दुर्योधन उवाच ।
शृणु राजन्पुराऽचिन्त्यानर्जुनस्य च साहसान् ।
अर्जुनो धन्विनां श्रेष्ठो दुष्करं कृतवान्पुरा ॥ १
द्रुपदस्य पुरे राजन्द्रौपद्याश्च स्वयंवरे ।

आबालवृद्धसंक्षोभे सर्वक्षत्रसमागमे ।
क्षिप्रकारी जले मत्स्यं दुर्निरीक्ष्यं ससर्ज ह ॥ २
सर्वैर्नृपैरसाध्यं तत्कार्मुकप्रवरं च वै ।
क्षणेन सज्यमकरोत्सर्वक्षत्रस्य पश्यतः ॥ ३
ततो यन्त्रमयं विध्वा विसारं फल्गुनो बली ।
कृष्णया हेममाल्येन स्कन्धे स परिवेष्टितः ॥ ४
ततस्तया वृतं पार्थं दृष्ट्वा सर्वे नृपास्तदा ।
रोषात्सर्वायुधान्गृह्य क्रुद्धा वीरा महौजसः ।
वैकर्तनं पुरस्कृत्य सर्वे पार्थमुपाद्रवन् ॥ ५
स सर्वान्पार्थिवान्दृष्ट्वा क्रुद्धान्पार्थो महाबलः ।
वारयित्वा शरैस्तीक्ष्णैरजयत्तत्र स स्वयम् ॥ ६
जित्वा तु तान्महीपालान्सर्वान्कर्णपुरोगमान् ।
लेभे कृष्णां शुभां पार्थो युध्वा वीर्यबलात्तदा ॥७
सर्वक्षत्रसमूहेषु अम्बां भीष्मो यथा पुरा ।
ततः कदाचिद्बीभत्सुस्तीर्थयात्रां ययौ स्वयम् ॥८
अथोलूपीं शुभां तात नागराजसुतां तदा ।
नागेष्वाप वराम्येषु प्रार्थितोऽथ यथा तथा ॥९
ततो गोदावरीं कृष्णां कावेरीं चावगाहत ।
तत्र पाण्ड्यं समासाद्य तस्य कन्यामवाप सः १०
लब्ध्वा जिष्णुर्मुदं तत्र ततो याम्यां दिशं ययौ ११
स दक्षिणं समुद्रान्तं गत्वा चाप्सरसां च वै ।
कुमारतीर्थमासाद्य मोक्षयामास चार्जुनः ॥ १२
ग्राहरूपाश्च ताः पञ्च अतिशौर्येण वै बलात् ।
कन्यातीर्थं समभ्येत्य ततो द्वारवतीं ययौ ॥१३
तत्र कृष्णनिदेशात्स सुभद्रां प्राप्य फल्गुनः ।
तामारोप्य रथोपस्थे प्रययौ स्वपुरीं प्रति ॥ १४
अथादाय गते पार्थे ते श्रुत्वा सर्वयादवाः ।
तमभ्यधावन्त्संक्रुद्धाः सिंहव्याघ्रगणा इव ॥ १५
प्रद्युम्नः कृतवर्मा च गदः सारणसात्यकी ।
आहुकश्चैव साम्बश्च चारुदेष्णो विदूरथः ॥ १६
अन्ये च यादवाः सर्वे बलदेवपुरोगमाः ।
एकमेव परे कृष्णं गजवाजिरथैर्युताः ॥ १७
अथासाद्य वने यान्तं परिवार्य धनञ्जयम् ।
चक्रुर्युद्धं सुसंक्रुद्धा बहुकोट्यश्च यादवाः ॥ १८
एक एव तु पार्थस्तैर्युद्धं चक्रे सुदारुणम् ।
तेन तेषां समं युद्धं मुहूर्तं प्रबभूव ह ॥ १९
ततः पार्थो रणे सर्वान्वारयित्वा शितैः शरैः ।
बलाद्विजित्य राजेन्द्र वीरस्तान्सर्वयादवान् ।
तां सुभद्रामथादाय शक्रप्रस्थं विवेश ह ॥ २०
भूयः शृणु महाराज फल्गुनस्य च साहसम् ।
ददौ स वह्नेर्बीभत्सुः प्रार्थितं खाण्डवं वनम् २१
लब्धमात्रे तु तेनाथ भगवान्हव्यवाहनः ।
भक्षितुं खाण्डवं राजंस्तत्रस्थानुपचक्रमे ॥ २२
ततस्तं भक्षयन्तं वै सव्यसाची विभावसुम् ।
रथी धन्वी शरान्गृह्य स कलापयुतः प्रभुः ।
पालयामास राजेन्द्र स्ववीर्येण महाबलः ॥ २३
ततः श्रुत्वा महेन्द्रस्तु मेघांस्तान्सन्दिदेश ह ।
तेनोक्ता मेघसङ्घास्ते ववर्षुरतिवृष्टिभिः ॥ २४
ततो मेघगणान्पार्थः शरव्रातैः समन्ततः ।
खगमैर्वारयामास तदाश्चर्यमिवाभवत् ॥ २५
वारितान्मेघसङ्घांश्च श्रुत्वा क्रुद्धः पुरन्दरः ।
पाण्डरं गजमास्थाय सर्वदेवगणैर्वृतः ।
ययौ पार्थेन संयोद्धुं रक्षार्थं खाण्डवस्य च ॥२६
रुद्राश्च मरुतश्चैव वसवश्चाश्विनौ तदा ।
आदित्याश्चैव साध्याश्च विश्वेदेवाश्च भारत ।
गन्धर्वाश्चैव सहिता अन्ये देवगणाश्च ये ॥ २७
ते सर्वे शस्त्रसंपन्ना दीप्यमानाः स्वतेजसा ।
धनञ्जयं जिघांसन्तः प्रपेतुर्विबुधाधिपाः ॥ २८
युगान्ते यानि दृश्यन्ते निमित्तानि महान्त्यपि ।
सर्वाणि तत्र दृश्यन्ते निमित्तानि महीपते ॥२९
ततो देवगणाः सर्वे पार्थं समभिदुद्रुवुः ।
असंभ्रान्तस्तु तान्दृष्ट्वा स तां देवमयीं चमूम् ३०
त्वरितः फल्गुनो गृह्य तीक्ष्णांस्तानाशुगांस्तदा ।
इन्द्रं देवांश्च संप्रेक्ष्य तस्थौ काल इवात्यये ॥३१
ततो देवगणाः सर्वे बीभत्सुं सपुरन्दराः ।
अवाकिरञ्छरव्रातैर्मानुषं तं महीपते ॥ ३२
ततः पार्थो महातेजा गाण्डिवं गृह्य सत्वरः ।
वारयामास देवानां शरव्रातैः शरांस्तदा ॥ ३३

पुनः क्रुद्धाः सुराः सर्वे मर्त्यं तं सुमहाबलाः ।
नानाशस्त्रैर्ववर्षुस्तं सव्यसाची महीपते ॥ ३४
तान्पार्थः शस्त्रवर्षान्वै विसृष्टान्विबुधैस्तदा ।
द्विधा त्रिधा स चिच्छेद स एव निशितैः शरैः ॥
पुनश्च पार्थः संक्रुद्धो मण्डलीकृतकार्मुकः ।
देवसङ्घाञ्छरैस्तीक्ष्णैरर्पयन्वै समन्ततः ॥ ३६
ततो देवगणाः सर्वे युध्वा पार्थेन वै मुहुः ।
रणे जेतुमशक्यं तं ज्ञात्वा ते भरतर्षभ ॥ ३७
शान्तास्ते विबुधाः सर्वे पार्थबाणाभिपीडिताः ।
सद्विपं वासवं त्यक्त्वा दुद्रुवुः सर्वतो दिशम् ॥३८
प्राचीं रुद्राः सगन्धर्वा दक्षिणां मरुतो ययुः ।
दिशं प्रतीचीं भीतास्ते वसवश्च तथाऽश्विनौ ॥३९
आदित्याश्चैव विश्वे च दुद्रुवुर्वा उदङ्मुखाः ।
साध्याश्चोर्ध्वमुखा भीताश्चिन्तयन्तोऽस्य सायकान्
एवं सुरगणाः सर्वे प्राद्रवन्त्सर्वतो दिशम् ।
मुहुर्मुहुः प्रेक्षमाणाः पार्थमेव सकार्मुकम् ॥ ४१
विद्रुतान्देवसङ्घांस्तान्रणे दृष्ट्वा पुरन्दरः ।
ततः क्रुद्धो महातेजाः पार्थं बाणैरवाकिरत् ॥४२
पार्थोऽपि शक्रं विव्याध मानुषो विबुधाधिपम् ॥
ततः सोऽश्ममयं वर्षं व्यसृजद्विबुधाधिपः ।
तच्छरैरर्जुनो वर्षं प्रतिजघ्नेऽत्यमर्षणः ॥ ४४
अथ संवर्धयामास तद्वर्षं देवराडपि ।
भूय एव महावीर्यं जिज्ञासुः सव्यसाचिनः ॥४५
सोऽश्मवर्षं महावेगमिषुभिः पाण्डवोऽपि च ।
विलयं गमयामास हर्षयन्पाकशासनम् ॥ ४६
उपादाय तु पाणिभ्यामङ्गदं नाम पर्वतम् ।
सद्रुमं व्यसृजच्छक्रो जिघांसुः श्वेतवाहनम् ॥४७
ततोऽर्जुनो वेगवद्भिर्ज्वलमानैरजिह्मगैः ।
बाणैर्विध्वंसयामास गिरिराजं सहस्रधा ॥ ४८
शक्रं च पातयामास शरैः पार्थो महान्युधि ।
ततः शक्रो महाराज रणे वीरं धनञ्जयम् ॥४९
ज्ञात्वा जेतुमशक्यं तं तेजोबलसमन्वितम् ।
परां प्रीतिं ययौ तत्र पुत्रशौर्येण वासवः ॥ ५०
तदा तत्र न तस्यास्ति दिवि कश्चिन्महायशाः ।
समर्थो निर्जये राजन्नपि साक्षात्प्रजापतिः ॥५१
ततः पार्थः शरैर्हत्वा यक्षराक्षसपन्नगान् ।
दीप्ते चाग्नौ महातेजाः पातयामास सन्ततम् ॥५२
प्रतिषेधयितुं पार्थं न शेकुस्तत्र केचन ।
दृष्ट्वा निवारितं शक्रं दिवि देवगणैः सह ॥ ५३
यथा सुपर्णः सोमार्थं विबुधानजयत्पुरा ।
तथा जित्वा सुरान्पार्थस्तर्पयामास पावकम् ॥५४
ततोऽर्जुनः स्ववीर्येण तर्पयित्वा विभावसुम् ।
रथं ध्वजं च सहयं दिव्यानस्त्रांश्च पाण्डवः ॥५५
गाण्डीवं च धनुःश्रेष्ठं तूणी चाक्षयसायकौ ।
एतान्यपि च बीभत्सुर्लेभे कीर्तिं च भारत ॥५६
भूयोऽपि शृणु राजेन्द्र पार्थो गत्वोत्तरां दिशम् ।
विजित्य नववर्षांश्च सपुरांश्च सपर्वतान् ॥ ५७
जम्बूद्वीपं वशे कृत्वा सर्वं तद्भरतर्षभ ।
बलाज्जित्वा नृपान्सर्वान्करे च विनिवेश्य च ॥५८
रत्नान्यादाय सर्वाणि गत्वा चैव पुनः पुरीम् ।
ततो ज्येष्ठं महात्मानं धर्मराजं युधिष्ठिरम् ।
राजसूयं क्रतुश्रेष्ठं कारयामास भारत ॥ ५९
स तान्यन्यानि कर्माणि कृतवानर्जुनः पुरा ।
अर्जुनेन समो वीर्ये त्रिषु लोकेषु न क्वचित् ॥६०
देवदानवयक्षाश्च पिशाचोरगराक्षसाः ।
भीष्मद्रोणादयः सर्वे कुरवश्च महारथाः ॥ ६१
लोके सर्वनृपाश्चैव वीराश्चान्ये धनुर्धराः ।
एते पार्थं रणे युक्ताः प्रतियोद्धुं न शक्नुयुः ॥६२
अहं हि नित्यं कौरव्य फल्गुनं हृदि संस्थितम् ।
अपश्यं चिन्तयित्वा तं समुद्विग्नोऽस्मि तद्भयात् ॥
गृहे गृहे च पश्यामि तात पार्थमहं सदा ।
शरगाण्डीवसंयुक्तं पाशहस्तमिवान्तकम् ॥ ६४
अपि पार्थसहस्राणि भीतः पश्यामि भारत ।
पार्थभूतमिदं सर्वं नगरं प्रतिभाति मे ॥ ६५
पार्थमेव हि पश्यामि रहिते तात भारत ।
दृष्ट्वा स्वप्नगतं पार्थमुद्भ्रमामि विचेतनः ॥ ६६
अकारादीनि नामानि अर्जुनग्रस्तचेतसः ।
अश्वाक्षराम्बुजाश्चैव त्रासं संजनयन्ति मे ॥ ६७

नास्ति पार्थादृते तात परवीराद्भयं मम ।
प्रह्लादं वा बलिं वापि हन्याद्धि विजयो रणे ॥६८
तस्मात्तेन महाराज युद्धं नस्तात न क्षमम् ।
अहं तस्य प्रभावज्ञो नित्यं दुःखं वहामि च ॥६९
पुरा हि दण्डकारण्ये मारीचस्य यथा भयम् ।
भवेद्रामे महावीर्ये तथा पार्थे भयं मम ॥ ७०

धृतराष्ट्र उवाच ।

जानाम्येव महद्वीर्यं जिष्णोरेतद्दुरासदम् ।
एतद्वीरस्य पार्थस्य मा कार्षीस्त्वं तु विप्रियम् ७१
द्यूतं वा शस्त्रयुद्धं वा दुर्वाक्यं वा कथंचन ।
एतेष्वेवं कृते तस्य विग्रहश्चैव वो भवेत् ॥ ७२
तस्मात्त्वं पुत्र पार्थेन नित्यं स्नेहेन वर्तय ।
यश्च पार्थेन संबन्धो वर्तते चेन्नरो भुवि ॥ ७३
तस्य नास्ति भयं किंचित्त्रिषु लोकेषु भारत ।
तस्मात्त्वं जिष्णुना वत्स नित्यं स्नेहेन वर्तय ॥७४

दुर्योधन उवाच ।

द्यूते पार्थस्य कौरव्य मायया निकृतिः कृता ।
तस्माद्धि नो जयस्तात अन्योपायेन नो भवेत् ७५

धृतराष्ट्र उवाच ।

उपायश्च न कर्तव्यः पाण्डवान्प्रति भारत ।
पार्थान्प्रति पुरा वत्स बहूपायाः कृतास्त्वया ७६
तानुपायान्हि कौन्तेया बहुशो व्यतिचक्रमुः ।
तस्माद्धितं जीविताय नः कुलस्य जनस्य च॥७७
त्वं चिकीर्षसि चेद्वत्स समित्रः सहबान्धवः ।
सभ्रातृकस्त्वं पार्थेन नित्यं स्नेहेन वर्तय ॥ ७८

वैशंपायन उवाच ।

धृतराष्ट्रवचः श्रुत्वा राजा दुर्योधनस्तदा ।
चिन्तयित्वा मुहूर्तं तु विधिना चोदितोऽब्रवीत्' ॥
पुनर्दीव्याम भद्रं ते वनवासाय पाण्डवैः ।
एवमेतान्वशे कर्तुं शक्ष्यामः पुरुषर्षभ ॥ ८०
ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः ।
प्रविशेम महारण्यमजिनैः प्रतिवासिताः ॥ ८१
त्रयोदशं च स्वजनैरज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ८२
निवसेम वयं ते वा तथा द्यूतं प्रवर्तताम् ।
अक्षानुप्त्वा पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः ॥ ८३
एतत्कृत्यतमं राजन्नस्माकं भरतर्षभ ।
अयं हि शकुनिर्वेद सविद्यामक्षसंपदम् ॥ ८४
दृढमूला वयं राज्ये मित्राणि परिगृह्य च ।
सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदम् ॥ ८५
ते च त्रयोदशं वर्षं पारयिष्यन्ति चेद्व्रतम् ।
जेष्यामस्तान्वयं राजन्रोचतां ते परन्तप ॥ ८६

धृतराष्ट्र उवाच ।

तूर्णं प्रत्यानयस्वैतान्कामं व्यध्वगतानपि ।
आगच्छन्तु पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः ॥ ८७

वैशंपायन उवाच ।

ततो द्रोणः सोमदत्तो बाह्लीकश्चैव गौतमः ।
विदुरो द्रोणपुत्रश्च वैश्यापुत्रश्च वीर्यवान् ॥ ८८
भूरिश्रवाः शान्तनवो विकर्णश्च महारथः ।
मा द्यूतमित्यभाषन्त शमोऽस्त्विति च सर्वशः ८९
अकामानां च सर्वेषां सुहृदामर्थदर्शिनाम् ।
अकरोत्पाण्डवाह्वानं धृतराष्ट्रः सुतप्रियः ॥ ९०
अथाब्रवीन्महाराज धृतराष्ट्रं जनेश्वरम् ।
पुत्रहार्दाद्धर्मयुक्ता गान्धारी शोककर्शिता ॥ ९१
जाते दुर्योधने क्षत्ता महामतिरभाषत ।
नीयतां परलोकाय साध्वयं कुलपांसनः ॥ ९२
व्यनदज्जातमात्रो हि गोमायुरिव भारत ।
अन्तो नूनं कुलस्यास्य कुरवस्तन्निबोधत ॥ ९३
मा निमज्जीः स्वदोषेण महाप्सु त्वं हि भारत ।
मा बालानामशिष्टानामभिमंस्था मतिं प्रभो ॥९४
मा कुलस्य क्षये घोरे कारणं त्वं भविष्यसि ।
बद्धं सेतुं को नु भिन्द्याद्धमेच्छान्तं च पावकम् ९५
शमे स्थितान्को नु पार्थान्कोपयेद्भरतर्षभ ।
स्मरन्तं त्वामाजमीढं स्मारयिष्याम्यहं पुनः ॥९६
शास्त्रं न शास्ति दुर्बुद्धिं श्रेयसे चेतराय च ।
न वै वृद्धो बालमतिर्भवेद्राजन्कथंचन ॥ ९७

अकामानां द्यूतमनिच्छतां सताम् ॥ ९० ॥

त्वन्नेत्राः सन्तु ते पुत्रा मा त्वां दीर्णाः प्रहासिषुः ।
तस्मादयं मद्वचनात्त्यज्यतां कुलपांसनः ॥ ९८
तथा ते न कृतं राजन्पुत्रस्नेहान्नराधिप ।
तस्य प्राप्तं फलं विद्धि कुलान्तकरणाय यत् ॥ ९९
शमेन धर्मेण नयेन युक्ता
या ते बुद्धिः साऽस्तु ते मा प्रमादीः ।
प्रध्वंसिनी क्रूरसमाहिता श्री-
र्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ १००
अथाब्रवीन्महाराजो गान्धारीं धर्मदर्शिनीम् ।
अन्तः कामं कुलस्यास्तु न शक्नोमि निवारितुं १०१
यथेच्छन्ति तथैवास्तु प्रत्यागच्छन्तु पाण्डवाः ।
पुनर्द्यूतं च कुर्वन्तु मामकाः पाण्डवैः सह ॥ १०२

॥ इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

निजनगरं गच्छतो युधिष्ठिरस्य मध्येमार्गं दूताह्वानेन पुनर्निवृत्त्य द्यूतसभाप्रवेशः ॥ १ ॥ अनुद्यूतेपि युधिष्ठिरस्य शकुनिना पराजयः ॥ २ ॥

वैशंपायन उवाच ।
ततो व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम् ।
उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ॥ १
उपास्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर ।
एहि पाण्डव दीव्येति पिता त्वाह नराधिपः ॥ २
युधिष्ठिर उवाच ।
धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभम् ।
न निवृत्तिस्तयोरस्ति देवितव्यं पुनर्यदि ॥ ३
अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च ।
जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ॥ ४
वैशंपायन उवाच ।
असंभवो हेममयस्य जन्तो-
स्तथापि रामो लुलुभे मृगाय ।
प्रायः समासन्नपराभवाणां
धियो विपर्यस्ततरा भवन्ति ॥ ५
इति ब्रुवन्निववृते भ्रातृभिः सह पाण्डवः ।
जानंश्च शकुनेर्मायां पार्थो द्यूतमियात्पुनः ॥ ६
विविशुस्ते सभां तां तु पुनरेव महारथाः ।
व्यथयन्ति स्म चेतांसि सुहृदां भरतर्षभाः ॥ ७
यथोपजोषमासीनाः पुनर्द्यूतप्रवृत्तये ।
सर्वलोकविनाशाय दैवेनोपनिपीडिताः ॥ ८
शकुनिरुवाच ।
अमुञ्चत्स्थविरो यद्वो धनं पूजितमेव तत् ।
महाधनं ग्लहं त्वेकं शृणु भो भरतर्षभ ॥ ९
वयं वा द्वादशाब्दानि युष्माभिर्द्यूतनिर्जिताः ।
प्रविशेम महारण्यं रौरवाजिनवाससः ॥ १०
त्रयोदशं च सजनैरज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ११
अस्माभिर्निर्जिता यूयं वने द्वादश वत्सरान् ।
वसध्वं कृष्णया सार्धमजिनैः प्रतिवासिताः ॥ १२
त्रयोदशं च सजनैरज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ १३
त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम् ।
स्वराज्यं प्रतिपत्तव्यमितरैरथवेतरैः ॥ १४
अनेन व्यवसायेन सहास्माभिर्युधिष्ठिर ।
अक्षानुप्त्वा पुनर्द्यूतमेहि दीव्यस्व भारत ॥ १५
अथ सभ्याः सभामध्ये समुच्छ्रितकरास्तदा ।
ऊचुरुद्विग्नमनसः संवेगात्सर्व एव हि ॥ १६
सभ्या ऊचुः ।
अहो धिग्बान्धवा नैनं बोधयन्ति महद्भयम् ।

---

त्वन्नेत्रास्त्वमेव नेता येषां ते त्वन्नेत्राः । दीर्णास्त्वत्तो भिन्नमर्यादाः ॥ ९८ ॥ सप्तनवतितमोऽध्यायः ॥ ९७ ॥

संवेगादतिशयात् ॥ १६ ॥ अष्टनवतितमोऽध्यायः ॥ ९८ ॥

बुद्ध्या बुद्ध्येन्न वा बुद्ध्येदयं वै भरतर्षभ ॥ १७
वैशंपायन उवाच ।
जनप्रवादान्सुबहूञ्शृण्वन्नपि नराधिपः ।
ह्रिया च धर्मसंयोगात्पार्थो द्यूतमियात्पुनः ॥१८
जानन्नपि महाबुद्धिः पुनर्द्यूतमवर्तयत् ।
अप्यासन्नो विनाशः स्यात्कुरूणामितिचिन्तयन् ॥
युधिष्ठिर उवाच ।
कथं वै मद्विधो राजा स्वधर्ममनुपालयन् ।
आहूतो विनिवर्तेत दीव्यामि शकुने त्वया ॥२०
शकुनिरुवाच ।
गवाश्वं बहुधेनूकमपर्यन्तमजाविकम् ।
गजाः कोशो हिरण्यं च दासीदासाश्च सर्वशः॥२१
हित्वा नो ग्लह एवैको वनवासाय पाण्डवाः ।
यूयं वयं वा विजिता वसेम वनमाश्रिताः ॥२२
त्रयोदशं च वै वर्षमज्ञाताः स्वजनैस्तथा ।
अनेन व्यवसायेन दीव्याम पुरुषर्षभाः ।
समुत्क्षेपेण चैकेन वनवासाय भारत ॥ २३
'वैशंपायन उवाच ।
एवं दैवबलाविष्टो धर्मराजो युधिष्ठिरः ।
भीष्मद्रोणाऽऽवार्यमाणो विदुरेण च धीमता २४
युयुत्सुना कृपेणाथ सञ्जयेन च भारत ।
गान्धार्या पृथया चैव भीमार्जुनयमैस्तथा ॥२५
विकर्णेन च वीरेण द्रौपद्या द्रौणिना तथा ।
सोमदत्तेन च तथा बाह्लीकेन च धीमता ॥२६
वार्यमाणोपि सततं न च राजन्नियच्छति ।
एवं संवार्यमाणोपि कौन्तेयो हितकाम्यया ॥२७
देवकार्यार्थसिद्ध्यर्थं मुहूर्तं कलिमाविशत् ।
आविष्टः कलिना राजञ्छकुनिं प्रत्यभाषत ॥२८
एवं भवत्विति तदा वनवासाय दीव्यति ।'
प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २९

॥ इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

## एकोनशततमोऽध्यायः ॥ ९९ ॥

वनाय प्रस्थितान्पाण्डवान्प्रति दुःशासनकृतापहासः ॥ १ ॥ पाण्डवानां बहुप्रतिज्ञाकरणपूर्वकं धृतराष्ट्रसमीपगमनम् ॥ २ ॥

वैशंपायन उवाच ।
ततः पराजिताः पार्था वनवासाय दीक्षिताः ।
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् ॥ १
अजिनैः संवृतान्दृष्ट्वा हृतराज्यानरिन्दमान् ।
प्रस्थितान्वनवासाय ततो दुःशासनोऽब्रवीत् ॥२
प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः ।
पराजिताः पाण्डवेया विपत्तिं परमां गताः ॥ ३
अद्य देवाः संप्रयाताः समैर्वर्त्मभिरस्थलैः ।
गुणज्येष्ठास्तथा श्रेष्ठाः श्रेयांसो यद्वयं परैः ॥ ४
नरकं पातिताः पार्था दीर्घकालमनन्तकम् ।
सुखाच्च हीना राज्याच्च विनष्टाः शाश्वतीः समाः ५
धनेन मत्ता ये ते स्म धार्तराष्ट्रान्प्रहासिषुः ।
ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः ॥६
चित्रान्सन्नाहानवमुञ्चन्तु चैषां
वासांसि दिव्यानि च भानुमन्ति ।
विवास्यन्तां रुरुचर्माणि सर्वे
यथा ग्लहं सौबलस्याभ्युपेताः ॥ ७
न सन्ति लोकेषु पुमांस ईदृशा
इत्येव ये भावितबुद्धयः सदा ।
ज्ञास्यन्ति तेत्मानमिमेऽद्य पाण्डवा
विपर्यये षण्ढतिला इवाफलाः ॥ ८
इदं हि वासो यदि वेदृशानां
मनस्विनां रौरवमाहवेषु ।
आदीक्षितानामजिनानि यद्व-
द्बलीयसां पश्यत पाण्डवानाम् ॥ ९

महाप्राज्ञः सौमकिर्यज्ञसेनः
कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय ।
अकार्षीद्वै सुकृतं नेह किंचित्
क्लीबाः पार्थाः पतयो याज्ञसेन्याः ॥ १०
सूक्ष्मप्रावारानजिनोत्तरीयान्
दृष्ट्वाऽरण्ये निर्धनानप्रतिष्ठान् ।
कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि
पतिं वृणीष्वेह यमन्यमिच्छसि ॥ ११
एते हि सर्वे कुरवः समेताः
क्षान्ता दान्ताः सुद्रविणोपपन्नाः ।
एषां वृणीष्वैकतमं पतित्वे
न त्वां नयेत्कालविपर्ययोऽयम् ॥ १२
यथाऽफलाः षण्ढतिला यथा चर्ममया मृगाः ।
तथैव पाण्डवाः सर्वे यथा काकयवा अपि ॥ १३
किं पाण्डवांस्ते पतितानुपास्य
मोघः श्रमः षण्ढतिलानुपास्य ।
एवं नृशंसः परुषाणि पार्था-
नश्रावयद्धृतराष्ट्रस्य पुत्रः ॥ १४
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी
निर्भर्त्स्योच्चैः सन्निगृह्यैव रोषात् ।
उवाच चैनं सहसैवोपगम्य
सिंहो यथा हैमवतः शृगालम् ॥ १५
भीमसेन उवाच ।
क्रूर पापजनैर्जुष्टमकृतार्थं प्रभाषसे ।
गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे ॥ १६
यथा तुदसि मर्माणि वाक्छरैरिह नो भृशम् ।
तथा स्मारयिता तेऽहं कृन्तन्मर्माणि संयुगे ॥ १७
ये च त्वामनुवर्तन्ते क्रोधलोभवशानुगाः ।
गोप्तारः सानुबन्धांस्तान्नेताऽस्मि यमसादनम् १८
वैशंपायन उवाच ।
एवं ब्रुवाणमजिनैर्विवासितं
दुःशासनस्तं परिनृत्यति स ।
मध्ये कुरूणां धर्मनिबद्धमार्गे
गौर्गौरिति स्माह्वयन्मुक्तलज्जः ॥ १९
भीमसेन उवाच ।
नृशंस परुषं वक्तुं शक्यं दुःशासन त्वया ।
निकृत्या हि धनं लब्ध्वा को विकत्थितुमर्हति २०
मैव स सुकृतां लोकान्गच्छेत्पार्थो वृकोदरः ।
यदि वक्षो हि ते भित्त्वा न पिबेच्छोणितं रणे २१
धार्तराष्ट्रान्रणे हत्वा मिषतां सर्वधन्विनाम् ।
शर्म गन्ताऽस्मि नचिरात्सत्यमेतद्ब्रवीमि ते ॥ २२
वैशंपायन उवाच ।
तस्य राजा सिंहगतेः सखेलं
दुर्योधनो भीमसेनस्य हर्षात् ।
गतिं स्वगत्याऽनुचकार मन्दो
निर्गच्छतां पाण्डवानां सभायाः ॥ २३
नैतावता कृतमित्यब्रवीत्तं
वृकोदरः सन्निवृत्तार्धकायः ।
शीघ्रं हि त्वां निहतं सानुबन्धं
संस्मार्याहं प्रतिवक्ष्यामि मूढ ॥ २४
एवं समीक्ष्यात्मनि चावमानं
नियम्य मन्युं बलवान्स मानी ।
राजानुगः संसदि कौरवाणां
विनिष्क्रामन्वाक्यमुवाच भीमः ॥ २५
अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाक्षकितवं सहदेवो हनिष्यति ॥ २६
इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥ २७
सुयोधनमिमं पापं हन्ताऽस्मि गदया युधि ।
शिरः पादेन चास्याहमधिष्ठास्यामि भूतले ॥ २८
वाक्यशूरस्य चैवास्य परुषस्य दुरात्मनः ।
दुःशासनस्य रुधिरं पाताऽस्मि मृगराडिव ॥ २९
अर्जुन उवाच ।
'भीमसेन न ते सन्ति येषां वैरं त्वया त्विह ।
मत्ता मृगेषु सुखिनो न बुद्ध्यन्ते महद्भयम् ।' ३०

काकयवा निस्तण्डुलं तृणधान्यम् ॥ १३ ॥ स्मारयिता स्मारयिष्यामि ॥ १७ ॥ गौर्गौरित्युपहासः ॥ १९ ॥

नैवं वाचा व्यवसितं भीम विज्ञायते सताम् ।
इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ॥ ३१
भीमसेन उवाच ।
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ३२
अर्जुन उवाच ।
असूयितारं द्रष्टारं प्रवक्तारं विकत्थनम् ।
भीमसेन नियोगात्ते हन्ताहं कर्णमाहवे ॥ ३३
अर्जुनः प्रतिजानीते भीमस्य प्रियकाम्यया ।
कर्णं कर्णानुगांश्चैव रणे हन्ताऽस्मि पत्रिभिः ॥३४
ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्वानहं बाणैर्नेताऽस्मि यमसादनम् ॥ ३५
चलेद्धि हिमवान्स्थानान्निष्प्रभः स्याद्दिवाकरः ।
शैत्यं सोमात्प्रणश्येत मत्सत्यं विचलेद्यदि ॥ ३६
न प्रदास्यति चेद्राज्यमितो वर्षे चतुर्दशे ।
दुर्योधनोऽभिसत्कृत्य सत्यमेतद्भविष्यति ॥ ३७
वैशंपायन उवाच ।
इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः ।
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ ३८
सौबलस्य वधं प्रेप्सुरिदं वचनमब्रवीत् ।
क्रोधसंरक्तनयनो निःश्वसन्निव पन्नगः ॥ ३९
सहदेव उवाच ।
अक्षान्यान्मन्यसे मूढ गान्धाराणां यशोहर ।
नैतेऽक्षा निशिता बाणास्त्वयैते समरे वृताः ॥४०
यथा चैवोक्तवान्भीमस्त्वामुद्दिश्य सबान्धवम् ।
कर्ताहं कर्मणस्तस्य कुरु कार्याणि सर्वशः ॥ ४१
हन्ताऽस्मि तरसा युद्धे त्वामेवेह सबान्धवम् ।
यदि स्थास्यसि सङ्ग्रामे क्षत्रधर्मेण सौबल ॥ ४२
सहदेववचः श्रुत्वा नकुलोऽपि विशांपते ।
दर्शनीयतमो नृणामिदं वचनमब्रवीत् ॥ ४३
सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन्धृतराष्ट्रजैः ।
यैर्वाचः श्राविता रूक्षाः स्थितैर्दुर्योधनप्रिये ॥४४
तान्धार्तराष्ट्रान्दुर्वृत्तान्मुमूर्षून्कालनोदितान् ।
गमयिष्यामि भूयिष्ठानहं वैवस्वतक्षयम् ॥ ४५
'उलूकं च दुरात्मानं सौबलस्य सुतं प्रियम् ।
क्रूरं हन्ताऽस्मि समरे तं वै क्रूरं नराधमम् ॥'४६
निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्ताऽस्मि नचिरादिव ॥४७
वैशंपायन उवाच ।
एवं ते पुरुषव्याघ्राः सर्वे व्यायतबाहवः ।
प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन् ॥ ४८

॥ इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

---

## शततमोऽध्यायः ॥ १०० ॥

युधिष्ठिरेण वनगमनाय भीष्माद्यामन्त्रणम् ॥ १ ॥ पाण्डवान्प्रति विदुरवचनम् ॥ २ ॥

युधिष्ठिर उवाच ।
आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम् ।
राजानं सोमदत्तं च महाराजं च बाह्लिकम् ॥ १
द्रोणं कृपं नृपांश्चान्यानश्वत्थामानमेव च ।
विदुरं धृतराष्ट्रं च धार्तराष्ट्रांश्च सर्वशः ॥ २
'सौमदत्तिं महावीर्यं विकर्णं च महामतिम् ।'
युयुत्सुं सञ्जयं चैव तथैवान्यान्सभासदः ॥ ३
'गान्धारीं च महाभागां मातरं च तथा पृथाम्' ।
सर्वानामन्त्र्य गच्छामि द्रष्टाऽस्मि पुनरेत्य वः ॥ ४
वैशंपायन उवाच ।
न च किंचिदथोचुस्तं ह्रियाऽऽसन्ना युधिष्ठिरम् ।
मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ॥ ५
विदुर उवाच ।
आर्या पृथा राजपुत्री नारण्यं गन्तुमर्हति ।

प्रवक्तारं कुवृद्धेः ॥ ३३ ॥ एकं क्रूरमिति पदं क्रियाविशेषणम् ॥ ४६ ॥ एकोनशततमोऽध्यायः ॥ ९९ ॥

सुकुमारी च वृद्धा च नित्यं चैव सुखोचिता ॥६
इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि ।
इति पार्था विजानीध्वमगदं वोऽस्तु सर्वशः ॥७
पाण्डवा ऊचुः ।
तथेत्युक्त्वाऽब्रुवन्सर्वे यथा नो वदसेऽनघ ।
त्वं पितृव्यः पितृसमो वयं च त्वत्परायणाः ॥८
यथाऽऽज्ञापयसे विद्वंस्त्वं हि नः परमो गुरुः ।
यच्चान्यदपि कर्तव्यं तद्विधत्स्व महामते ॥ ९
विदुर उवाच ।
युधिष्ठिर विजानीहि ममेदं भरतर्षभ ।
नाधर्मेण जितः कश्चिद्व्यथते वै पराजये ॥ १०
त्वं वै धर्मं विजानीषे युद्धे जेता धनञ्जयः ।
हन्ताऽरीणां भीमसेनो नकुलस्त्वर्थसङ्ग्रही ॥ ११
संयन्ता सहदेवस्तु धौम्यो ब्रह्मविदुत्तमः ।
धर्मार्थकुशला चैव द्रौपदी धर्मचारिणी ॥ १२
अन्योन्यस्य प्रियाः सर्वे तथैव प्रियदर्शनाः ।
परैरभेद्याः सन्तुष्टाः को वो न स्पृहयेदिह ॥१३
एष वै सर्वकल्याणः समाधिस्तव भारत ।
नैनं शत्रुर्विषहते शक्रेणापि समोऽप्युत ॥ १४
हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा ।
द्वैपायनेन कृष्णेन नगरे वारणावते ॥ १५
भृगुतुङ्गे च रामेण दृषद्वत्यां च शंभुना ।
अश्रौषीरसि तस्यापि महर्षेरञ्जनं प्रति ॥ १६
कल्माषीतीरसंस्थस्य गतस्त्वं शिष्यतां भृगोः ।
द्रष्टा सदा नारदस्ते धौम्यस्तेऽयं पुरोहितः ॥१७
माहासीः सांपराये त्वं बुद्धिं तामृषिपूजिताम् ।
पुरूरवसमैलं त्वं बुद्ध्या जयसि पाण्डव ॥ १८
शक्त्या जयसि राज्ञोऽन्यानृषीन्धर्मोपसेवया ।
ऐन्द्रे जये धृतमना याम्ये कोपविधारणे ॥ १९
तथा विसर्गे कौबेरे वारुणे चैव संयमे ।
आत्मप्रदानं सौम्यत्वमद्भ्यश्चैवोपजीवनम् ॥ २०
भूमेः क्षमा च तेजश्च समग्रं सूर्यमण्डलात् ।
वायोर्बलं प्राप्नुहि त्वं भूतेभ्यश्चात्मसंपदम् ॥२१
अगदं वोऽस्तु भद्रं वो द्रष्टाऽसि पुनरागतान् ।
आपद्धर्मार्थकृच्छ्रेषु सर्वकार्येषु वा पुनः ॥ २२
यथावत्प्रतिपद्येथाः काले काले युधिष्ठिर ।
आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत ॥२३
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामः पुनरागतम् ।
न हि वो वृजिनं किंचिद्वेद कश्चित्पुराकृतम् ॥२४
वैशंपायन उवाच ।
एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः ।
भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः ॥२५

॥ इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि शततमोऽध्यायः ॥ १०० ॥

---

## एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

पाण्डवानां वनप्रस्थानेन खिद्यतां पौराणां वचनानि ॥ १ ॥

वैशंपायन उवाच ।
ततः संप्रस्थिते तत्र धर्मराजे तदा नृप ।
जनाः समन्ताद्द्रष्टुं तं समारुरुहुरातुराः ॥ १
ततः प्रासादवर्याणि विमानशिखराणि च ।
गोपुराणि च सर्वाणि वृक्षानन्यांश्च सर्वशः ॥ २
अथाधिरुह्य सस्त्रीका उदासीना व्यलोकयन् ।
न हि रथ्यास्तदा शक्या गन्तुं ताश्च जनाकुलाः ३
आरुह्य स्मानतास्तत्र दीनाः पश्यन्ति पाण्डवान् ।
पदातिं वर्जितच्छत्रं चेलभूषणवर्जितम् ॥ ४
वल्कलाजिनसंवीतं पार्थं दृष्ट्वा जनास्तदा ।
ऊचुर्बहुविधा वाचो भृशोपहतचेतसः ॥ ५
जना ऊचुः ।

---

समाधिर्मनःस्वास्थ्यकरो नियमः ॥ १४ ॥ विधारणे नियमने ॥ १९ ॥ विसर्गे दाने । संयमे वशीकरणे । उपजीवनं जीवनहेतुत्वम् ॥ २० ॥ शततमोऽध्यायः ॥ १०० ॥

यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ।
तमेकं कृष्णया सार्धमनुगच्छन्ति पाण्डवाः ॥ ६
चत्वारो भ्रातरश्चैव धौम्यश्चैव पुरोहितः ।
भीमार्जुनौ वारयित्वा निकृत्या बद्धकार्मुकौ ॥ ७
धर्म एवास्थितो येन त्यक्त्वा राज्यं महात्मना ।
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ॥ ८
तामद्य कृष्णां पश्यन्ति राजमार्गगता जनाः ।
अङ्गरागोचितां कृष्णां रक्तचन्दनसेविनीम् ॥ ९
वर्षमुष्णं च शीतं च नेष्यत्याशु विवर्णताम् ।
अद्य नूनं पृथा देवी सत्यमाविश्य भाषते ॥१०
पुत्रान्स्नुषां च देवी तु द्रष्टुमद्याथ नार्हति ।
निर्गुणस्यापि पुत्रस्य कथं स्याद्दुःखदर्शनम् ॥११
किंपुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ।
आनृशंस्यमनुक्रोशो धृतिः शीलं दमः शमः ॥१२
पाण्डवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम् ।
तस्मादस्योपघातेन प्रजाः परमपीडिताः ॥ १३
औदकानीव सत्वानि ग्रीष्मे सलिलसंक्षयात् ।
पीडया पीडितं सर्वं जगदस्य जगत्पतेः ॥ १४
मूलस्यैवोपघातेन वृक्षः पुष्पफलोपगः ।
मूलं ह्येष मनुष्याणां धर्मराजो महाद्युतिः ॥ १५
पुष्पं फलं च पत्रं च शाखास्तस्येतरे जनाः ।
ते भ्रातर इव क्षिप्रं सपुत्राः सहबान्धवाः ॥ १६
गच्छन्तमनुगच्छामो येन गच्छति पाण्डवः ।
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ॥१७
एकदुःखसुखाः पार्थमनुयाम सुधार्मिकम् ।
समुच्छ्रितपताकानि परिध्वस्ताजिराणि च ॥१८
उपात्तधनधान्यानि हृतसाराणि सर्वशः ।
रजसाऽप्यवकीर्णानि परित्यक्तानि दैवतैः ॥ १९
मूषकैः परिधावद्भिरुद्बलैरावृतानि च ।
अपेतोदकधूमानि हीनसंमार्जनानि च ॥ २०
प्रनष्टबलिकर्मेज्यामन्त्रहोमजपानि च ।
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ॥ २१
अस्मत्त्यक्तानि वेश्मानि सौबलः प्रतिपद्यताम् ।
वनं नगरमेवास्तु येन गच्छन्ति पाण्डवाः ॥ २२
अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनम् ।
बिलानि दंष्ट्रिणः सर्वे वनानि मृगपक्षिणः ॥२३
त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ।
अनाक्रान्तं प्रपद्यन्तः सेवमानं त्यजन्तु च ॥२४
तृणमांसफलादानां देशांस्त्यक्त्वा मृगद्विजाः ।
वयं पार्थैर्वने सम्यक्सह वत्स्याम निर्वृताः ॥२५
इत्येवं विविधा वाचो नानाजनसमीरिताः ।
शुश्राव पार्थः श्रुत्वा च न विचक्रेऽस्य मानसम् २६
ततः प्रासादसंस्थास्तु समन्ताद्वै गृहे गृहे ।
ब्राह्मणक्षत्रियविशां शूद्राणां चैव योषितः ॥२७
गत्वा स्वगृहजालानि उत्पाट्यावरणानि च ।
ददृशुः पाण्डवान्दीनान्वल्कलाजिनवाससः ॥२८
कृष्णां त्वदृष्टपूर्वां तां व्रजन्तीं पद्भिरेव च ।
एकवस्त्रां रुदन्तीं तां मुक्तकेशीं रजस्वलाम् ॥२९
दृष्ट्वा तदा स्त्रियः सर्वा विवर्णवदना भृशम् ।
विलप्य बहुधा मोहाद्दुःखशोकेन पीडिताः ।
हाहा धिग्धिग्धिगित्युक्त्वा नेत्रैरश्रूण्यवर्तयन् ३०
जनस्याथ वचः श्रुत्वा स राजा भ्रातृभिः सह ।
उद्दिश्य वनवासाय प्रतस्थे कृतनिश्चयः ॥ ३१

वैशंपायन उवाच ।

तस्मिन्संप्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम् ।
अपृच्छद्भृशदुःखार्ता याश्चान्यास्तत्र योषितः ॥३२
ततो निनादः सुमहान्पाण्डवान्तःपुरेऽभवत्॥३३
कुन्ती च भृशसन्तप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् ।
शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ॥ ३४
वत्से शोको न ते कार्यः प्राप्येदं व्यसनं महत् ।
स्त्रीधर्माणामभिज्ञाऽसि शीलाचारवती तथा ॥३५
न त्वां सन्देष्टुमर्हामि भर्तॄन्प्रति शुचिस्मिते ।
साध्वी गुणसमापन्ना भूषितं ते कुलद्वयम् ॥३६
सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयाऽनघे ।
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता ॥ ३७
भाविन्यर्थे हि सत्स्त्रीणां वैक्लव्यं नोपजायते ।
गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि ॥३८
सहदेवश्च मे पुत्रः सदाऽवेक्ष्यो वने वसन् ।

यथेदं व्यसनं प्राप्य नायं सीदेन्महामतिः ॥३९
वैशंपायन उवाच ।
तथेत्युक्त्वा तु सा देवी स्रवन्नेत्रजलाविला ।
शोणिताक्तैकवसना मुक्तकेशी विनिर्ययौ ॥ ४०
तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीम् ।
अथापश्यत्सुतान्सर्वान्हृताभरणवाससः ॥ ४१
रुरुचर्मावृततनूंन्ह्रिया किंचिदवाङ्मुखान् ।
परैः परीतान्संहृष्टैः सुहृद्भिश्चानुशोचितान् ॥ ४२
तदवस्थान्सुतान्सर्वानुपसृत्यातिवत्सला ।
स्वजमानाऽवदच्छोकात्तत्तद्विलपती बहु ॥ ४३
कुन्त्युवाच ।
कथं सद्धर्मचारित्रान्वृत्तस्थितिविभूषितान् ।
अक्षुद्रान्दृढभक्तांश्च दैवतेज्यापरान्सदा ॥ ४४
व्यसनं वः समभ्यागात्कोऽयं विधिविपर्ययः ।
कस्यापध्यानजं चेदमागः पश्यामि वो धिया ४५
स्यात्तु मद्भाग्यदोषोऽयं याऽहं युष्मानजीजनम् ।
दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः ॥ ४६
कथं वत्स्यथ दुर्गेषु वने ऋद्धिविनाकृताः ।
वीर्यसत्त्वबलोत्साहतेजोभिरकृशाः कृशाः ॥ ४७
यद्येवमहमज्ञास्यं वने वासं हि वो ध्रुवम् ।
शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयम् ॥४८
धन्यं वः पितरं मन्ये तपोमेधान्वितं तथा ।
यः पुत्राधिमसंप्राप्य स्वर्गेच्छामकरोत्प्रियाम् ॥४९
धन्यां चातीन्द्रियज्ञानामिमां प्राप्तां परां गतिम् ।
मन्ये तु माद्रीं धर्मज्ञां कल्याणीं सर्वथैव तु ॥५०
रत्या मत्या च गत्या च ययाऽहमभिसन्धिता ।
जीवितप्रियतां मह्यं धिङ्मां संक्लेशभागिनीम् ॥५१
पुत्रका न विहास्ये वः कृच्छ्रलब्धान्प्रियान्सतः ।
साऽहं यास्यामि हि वनं हा कृष्णे किं जहासि माम् ।
अन्तवत्यसुधर्मेऽस्मिन्धात्रा किं नु प्रमादतः ।
ममान्तो नैव विहितस्तेनायुर्न जहाति माम् ॥५३
हा कृष्ण द्वारकावासिन्कासि संकर्षणानुज ।
कस्मान्न त्रायसे दुःखान्मां चेमांश्च नरोत्तमान् ५४
अनादिनिधनं ये त्वामनुध्यायन्ति वै नराः ।
तांस्त्वं पासीत्ययं वादः स गतो व्यर्थतां कथम् ५५
इमे सद्धर्ममाहात्म्ययशोवीर्यानुवर्तिनः ।
नार्हन्ति व्यसनं भोक्तुं नन्वेषां क्रियतां दया ५६
सेयं नीत्यर्थविज्ञेषु भीष्मद्रोणकृपादिषु ।
स्थितेषु कुलनाथेषु कथमापदुपागता ॥ ५७
हा पाण्डो हा महाराज क्वासि किं समुपेक्षसे ।
पुत्रान्विवास्यतः साधूनरिभिर्द्यूतनिर्जितान् ॥५८
सहदेव निवर्तस्व ननु त्वमसि मे प्रियः ।
शरीरादपि माद्रेय मां मा त्याक्षीः कुपुत्रवत् ॥५९
व्रजन्तु भ्रातरस्तेऽमी यदि सत्याभिसन्धिनः ।
मत्परित्राणजं धर्ममिहैव त्वमवाप्नुहि ॥ ६०
वैशंपायन उवाच ।
एवं विलपतीं कुन्तीमभिवाद्य प्रणम्य च ।
पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः ॥ ६१
विदुरश्चापि तामार्तां कुन्तीमाश्वास्य हेतुभिः ।
प्रावेशयद्गृहं क्षत्ता स्वयमार्ततरः शनैः ॥ ६२
धार्तराष्ट्रस्त्रियस्ताश्च निखिलेनोपलभ्य तत् ।
गमनं परिकर्षं च कृष्णाया द्यूतमण्डले ॥ ६३
रुरुदुः सुस्वनं सर्वा विनिन्दन्त्यः कुरून्भृशम् ।
दध्युश्च सुचिरं कालं करासक्तमुखाम्बुजाः ॥६४
राजा च धृतराष्ट्रस्तु पुत्राणामनयं तदा ।
ध्यायन्नुद्विग्नहृदयो न शान्तिमधिजग्मिवान् ॥६५
स चिन्तयन्ननेकाग्रः शोकव्याकुलचेतनः ।
क्षत्तुः संप्रेषयामास शीघ्रमागम्यतामिति ॥ ६६
ततो जगाम विदुरो धृतराष्ट्रनिवेशनम् ।
तं पर्यपृच्छत्संविग्नो धृतराष्ट्रो जनाधिपः ॥ ६७

॥ इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

---

शोणिताक्तैकवसना रजस्वला ॥ ४० ॥ मह्यं मम ॥ ५१ ॥
असुधर्मे प्राणधारणे । अन्तवति विनाशवति ॥ ५३ ॥

एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

## द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

धृतराष्ट्रेण विदुरंप्रति पाण्डवानां वनप्रस्थानसमये चेष्टाविशेषप्रश्ने तत्तच्चेष्टाविशेषकथनपूर्वकं तत्तदभिप्रायाविष्करणम् ॥ १ ॥ द्रोणेन दुर्योधनाय हितोपदेशः ॥ २ ॥

वैशंपायन उवाच ।
तमागतमथो राजा विदुरं दीर्घदर्शिनम् ।
साशङ्क इव पप्रच्छ धृतराष्ट्रोऽम्बिकासुतः ॥ १
कथं गच्छति कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
भीमसेनः सव्यसाची माद्रीपुत्रौ च पाण्डवौ ॥२
धौम्यश्चैव कथं क्षत्तर्द्रौपदी च यशस्विनी ।
श्रोतुमिच्छाम्यहं सर्वं तेषां शंस विचेष्टितम् ॥ ३
विदुर उवाच ।
वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः ।
बाहू विशालौ संपश्यन्भीमो गच्छति पाण्डवः ॥४
सिकता वपन्सव्यसाची राजानमनुगच्छति ।
माद्रीपुत्रः सहदेवो मुखमालिप्य गच्छति ॥ ५
पांसूपलिप्तसर्वाङ्गो नकुलश्चित्तविह्वलः ।
दर्शनीयतमो लोके राजानमनुगच्छति ॥ ६
कृष्णा तु केशैः प्रच्छाद्य मुखमायतलोचना ।
दर्शनीया प्ररुदती राजानमनुगच्छति ॥ ७
धौम्यो रौद्राणि सामानि याम्यानि च विशांपते
गायन्गच्छति मार्गेषु कुशानादाय पाणिना ॥८
धृतराष्ट्र उवाच ।
विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः ।
तन्ममाचक्ष्व विदुर कस्मादेवं व्रजन्ति ते ॥ ९
विदुर उवाच ।
निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेषु च ।
न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमतः ॥ १०
योऽसौ राजा घृणी नित्यं धार्तराष्ट्रेषु भारत ।
निकृत्या भ्रंशितः क्रोधान्नोन्मीलयति लोचने ॥
नाहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा ।
स पिधाय मुखं राजा तस्माद्गच्छति पाण्डवः ॥१२
यथा च भीमो व्रजति तन्मे निगदतः शृणु ।
बाह्वोर्बले नास्ति समो ममेति भरतर्षभ ॥ १३
बाहू विशालौ कृत्वाऽसौ तेन भीमोपि गच्छति ।
बाहू विदर्शयन्राजन्बाहुद्रविणदर्पितः ॥ १४
चिकीर्षन्कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः ।
प्रदिशञ्शरसंपातान्कुन्तीपुत्रोऽर्जुनस्तदा ॥ १५
सिकता वपन्सव्यसाची राजानमनुगच्छति ।
असक्ताः सिकतास्तस्य यथा संप्रति भारत ।
असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु ॥ १६
न मे कश्चिद्विजानीयान्मुखमद्येति भारत ।
मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति ॥१७
नाहं मनांस्याददेयं मार्गे स्त्रीणामिति प्रभो ।
पांसूपलिप्तसर्वाङ्गो नकुलस्तेन गच्छति ॥ १८
एकवस्त्रा प्ररुदती मुक्तकेशी रजस्वला ।
शोणितेनाक्तवसना द्रौपदी वाक्यमब्रवीत् ॥१९
यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्दशे ।
हतपत्यो हतसुता हतबन्धुजनप्रियाः ॥ २०
बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः ।
एवं कृतोदका भार्याः प्रवेक्ष्यन्ति गजाह्वयम् ॥२१
कृत्वा तु नैर्ऋतान्दर्भान्धीरो धौम्यः पुरोहितः ।
सामानि गायन्याम्यानि पुरतो याति भारत २२
हतेषु भरतेष्वाजौ कुरूणां गुरवस्तदा ।
एवं सामानि गास्यन्तीत्युक्त्वा धौम्योपि गच्छति
'प्रस्थाप्य पाण्डवाञ्शेषान्निःशेषस्ते भविष्यति ।
इति धौम्यो व्यवसितो रौद्रसामानि गायति२४
धृतराष्ट्र उवाच ।
किमब्रुवन्नैकृतिकाः किं वा नागरिका जनाः ।
तथ्येन मे समाचक्ष्व क्षत्तः सर्वमशेषतः ॥ २५
विदुर उवाच ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा येऽन्ये वदन्त्यथ ।
तच्छृणुष्व महाराज वक्ष्यते च मया तव ॥ २६
प्रकृतय ऊचुः ।
हाहा गच्छन्ति नो नाथाः समवेक्षध्वमीदृशम् ।

असक्ताः परस्परमलग्नाः ॥ १६ ॥

